Important to every Student of Hindu Law.

**Recommended as a Text-Book**

**for the examinations for the office of the High Court Pleader by the High Court of Bombay and by the Sudder Court of Sindh.**

# HINDU LAW,

## Third Edition

## 1921.

BY


**J. R. GHARPURE,** B.A., LL.B. (Hons.)

*Fellow of the University of Bombay,*

*Editor "Collections of Hindu Law Texts"*


— o —

*Revised and enlarged, with a Map of India in different Colours indicating the several territorial Jurisdictions of different Schools; and two appendices at the end on the Mimansa Rules of Interpretation and the Doctrine of Sapinda*

---

# THE COLLECTIONS
OF
# Hindu Law Text-Series.

**The following are the Books undertaken and Published in this Series.**

**Edited by J. R. Gharpure, B.A., LL.B. (Hons.)**
**Vakil, High Court, Bombay.**

This Series was started in 1909 with the object of publishing all the important Texts bearing on Hindu Law, together with their English Translation.

No.

I. **Yâjñavalkya-Smṛiti** with the **Mitâkshara** of **Sri Vijñânes'vara.** (Text) pp. 450 + 63.

This book contains the Smriti of Yogi Yâjñavalkya with Vijñânes'vara's Mitâksharâ thereon. The book is divided into three Books or Adhyâyâs viz: The Achâra, the Vyavahâra and the Prâyaschhitta At the beginning has been given a short introduction containing information about the two writers. An exhaustive 'List of Contents' running over 22 pages in double columns, gives the heads of contents in minute, details. The Index to verses indexing each half of a Sloka and given at the end is also exhaustive covering 28 pages in double columns. Then follows the Index to the names of the Sages and Authors referred to in the body of the book, an Index to the *Nyayas* or maxims of law quoted in the book, as also an Index to the Rules of Grammar.

[ Completely bound price Rs. 6

II. The **Mitâksharâ**—An English Translation of the text as published in Vol. I of this series The translation of the Vyawahâra Adhyâya has been completed covering 424 pages. The text of Yâjñavalkya is translated and printed in black type, to distinguish it from the Mitâksharâ which is printed in the ordinary type with the quoted words and passages in thick types. The notes are critical and copious, and refer to all the decided cases. The translation of the Âchârâdhyaya is in progress.

The translation of Vyawahâra is ready for sale.

[ Bound]Volume Rs. 15-0.

धर्मशास्त्रग्रन्थमाला ( ग्रन्थाङ्कः २५ )

॥ श्रीः ॥

भट्टनीलकण्ठकृतभगवन्तभास्करे

# शान्तिमयूखः

## ( द्वादशः )

स च

जगन्नाथ रघुनाथ घारपुरे, बी. ए. एल्एल्. बी.
हायकोर्ट वकील, विश्वविद्यालयसदस्य.—मुंबई,

इत्यनेन संशोधितः प्रकाशितश्च ।

प्रथमावृत्तिः

शकाब्दाः १८४५, क्रिस्ताब्दाः १९२४.

# उपोद्घातः ।

धर्मशास्त्रग्रन्थमालाया अयं पंचविंशो ग्रन्थः प्रकाश्यते । श्रुतिस्मृतिपुराणेतिहासादि-निबन्धा बहवः प्रमाणग्रन्थाः सन्ति । तत्र बहुषु व्यवहारनिबन्धेषु सत्सु भट्ट-नीलकंठस्य मयूखा आर्यदेशस्य पश्चिमभूभागे विशेषतस्तत्र च श्रीपरशुरामक्षेत्रे गुर्जरदेशे त्वतीव प्रामाण्यतां गताः । राजशासनाधिकारिणोऽपि सामान्येन मिताक्षरामयूखावेव निर्णयेष्वाद्रियन्ते ।

तत्र भट्ट—नीलकण्ठस्थितिदेशकालबोधनाय श्रीकाशीक्षेत्रस्थविद्वच्छिरोमणि-'रानडे उपनामक-बालशास्त्री'–लिखितानुसारेण रावसाहेब विश्वनाथ नारायण मण्डलीकैस्तद्वंशो वर्णितः । स च तथैवात्र वर्ण्यते ।

"पुरा किल दक्षिणदेशे पैठणाख्यग्रामे गोविन्दभट्टो नाम महाविद्वांस्तपस्वी ब्राह्मणपुङ्गव आसीत् । तत्पुत्रो रामेश्वरभट्टनामा श्रीकाशीक्षेत्रं वासार्थं जगाम । तत्र च श्रीराममन्त्रेण सुचिरं भगवन्तं श्रीरामचन्द्रमुपासाञ्चक्रे । परिणतावस्थायां तस्य नारायणभट्टनामा पुत्रो बभूव । स बाल्य-प्रभृति शान्त्यादिगुणसंपन्नो महातपस्वी चाभवत् । तदानीमेव यवनैः श्रीविश्वेश्वरप्रासाद उत्सादितः । ततश्च कियता कालेन सर्वस्मिन्भारतवर्षेऽनावृष्टिरजायत । तदा सार्वभौमयवनैर्भट्टनारायणो वृष्ट्यर्थं प्रार्थितः । ततो नारायणभट्टेनाहोरात्राभ्यन्तरे वृष्टिर्भविष्यतीति प्रतिज्ञातं तथैव सर्वपृथिव्यां देवो ववर्ष । तेन सर्वं जगन्ननन्द । सार्वभौमयवनेभ्यो नारायणभट्टेन श्रीविश्वेश्वरप्रासादनिर्माणानुमति-र्याचिता सापि तैर्दत्ता । तदा तेन महाप्रासादं निर्माय श्रीविश्वेश्वरः प्रतिष्ठापितः । ततस्तस्य लोकोत्तरं ब्रह्मवर्चसमालोच्यास्तिकजनाः सर्वे परमभक्तिप्रेमगद्गदा बभूवुः सर्वैश्च जगद्गुरुरिति महापदवी दत्ता तत्कुलीनानां चाग्रपूजानियमो विहित इतीयं कथा श्रीकाशीक्षेत्रे सुप्रसिद्धा । नारायणभट्टस्य सर्वशास्त्र-पारावारीणता त्रिस्थलीसेतुप्रयोगरत्नाद्यनेकग्रन्थनिर्मित्या जगत्प्रसिद्धा वर्तते । किंचाद्य यावत्तन्निर्मित-ग्रन्थैरेव श्रौतस्मार्तधर्मरक्षणं जातमित्यपि सुप्रसिद्धम् । वक्ष्यमाणवंशक्रमो नारायणभट्टपुत्ररामकृष्णभट्ट-कृतज्योतिष्टोमपद्धतिग्रन्थे स्पष्टं लिखितस्तत्रेमौ श्लोकौ—

> श्रीमद्दाक्षिणदेशेऽगस्त्य इवासीत्स भट्टगोविन्दः ।
> तत्सूनुः श्रीरामेश्वरभट्टोऽभूत्स सर्वदिक्ख्यातः ॥ १ ॥
> तत्पुत्रः श्रीनारायणभट्टो जयति सूर्यवद्भूमौ ।
> तत्सूनू रामकृष्णभट्टो रामैकशरणतां यातः ॥ २ ॥

गोविन्दभट्टरामेश्वरभट्टाभ्यां निर्मिता ग्रन्थास्तज्जीवनसमयश्च साम्प्रतं यथार्थतया नोप-लभ्यन्ते । नारायणभट्टस्थितिसमयस्तु साक्षात्तद्धस्तलिखितपुस्तकस्थेभ्योऽङ्केभ्योऽवगम्यते । तत्रैकस्मि-न्पुस्तके विक्रमार्के संवत् १६२४ इत्यङ्का लिखिताः । पुस्तकान्तरे च

ऋषिबाणाब्धिभूगण्ये शाके ज्येष्ठे सिते रवौ ।
चतुर्दश्यां विशाखासु ग्रन्थोऽन्तं समगादयम् ॥
भट्टरामेशपुत्रेण काशीपुर्यां यथामति ।
लिखितः सप्तमोऽध्यायो भाष्ये शबरसत्कृता ॥

इति श्लोकाभ्यामिमेऽङ्का ( १४५७ ) दर्शिताः । तस्यैव पुस्तकस्य द्वादशाध्यायसमाप्तिपत्रे संवत् १६१२ इत्यङ्का लिखिताः । नारायणभट्टस्य रामकृष्णभट्टशङ्करभट्टशर्माणौ महानिबन्धकारौ सकलशास्त्रपारीणौ द्वौ पुत्रावास्ताम् । तत्र रामकृष्णभट्टकृतग्रन्थेषु महाग्रन्थस्तन्त्रवार्तिकव्याख्या धर्मशास्त्रे तु जीवत्पितृकनिर्णयप्रभृतयो बहवो ग्रन्थाः सन्ति । शङ्करभट्टकृतग्रन्थेषु द्वैतनिर्णयाख्यो महाग्रन्थः सुप्रसिद्धः । मीमांसायामपि कानिचित्प्रकरणान्युपलभ्यन्ते । द्वैतनिर्णयारम्भश्लोकाभ्यामेतन्निर्णीयते । तौ श्लोकौ यथा—

मीमांसासरसीसरोजमकरन्दास्वादनैकमतो
हंसः स्वीययशःसिताद्वयमतेरासीद्गुरूपाभिधः ।
वाग्देव्यागतमत्सरां श्रियमयं नित्यानुरक्तो भजन्
नो मुञ्चन्ननिमुक्तकं विजयते श्रीमट्टनारायणः ॥
विबुधानन्दसन्दोहहेतवे तत्तनूद्भवः ।
मीमांसाद्वैतसाम्राज्यनीतिज्ञो भट्टशङ्करः ॥

शङ्करभट्टस्य पुत्रौ द्वौ । नीलकण्ठभट्टो दामोदरभट्टश्च । तत्राद्यो महानिबन्धकारो दानमयूखादीनां द्वादशानां मयूखानां कर्ता । द्वितीयश्च द्वैतनिर्णयपरिशिष्टकार इति द्वैतनिर्णयस्यवृत्ताप्रदानिकप्रकरणादवगम्यते । नीलकण्ठपुत्रः शङ्करभट्टस्तत्कृता व्रतार्कप्रभृतयो ग्रन्था द्वादशार्कान्तनामान उत्तमनिबन्धाः सन्ति । रामकृष्णभट्टस्य दिनकरभट्ट–कमलाकरभट्ट–लक्ष्मणभट्टाख्यास्त्रयः पुत्रा बभूवुस्तत्र दिनकरभट्टेन कृता उद्योतशान्तिसारादिग्रन्थाः प्रसिद्धाः । दिनकरभट्टस्यैव क्वाचिद्ग्रन्थे दिवाकरभट्ट इति नाम्ना व्यवहारः । दिनकरभट्टस्य पुत्रो विश्वेश्वरभट्टस्तस्यैव गागाभट्ट इति नामान्तरम् । अनेन भाट्टचिन्तामणिप्रभृतयो बहवो ग्रन्थाः कृताः । कमलाकरभट्टस्य निर्णयसिन्धुप्रभृतयो ग्रन्था बहुतरमेव प्रसिद्धा भाव्याश्च सन्ति । तस्य च स्थितिसमयो निर्णयसिन्धुग्रन्थस्यान्तिमश्लोकेन स्पष्टीभवति । स तथा—

वसुऋतुऋतुभूमिते ( १६६८ ) मतेऽब्दे नरपतिविक्रमतोऽथ याति रौद्रे ।
तपसि शिवतिथौ समापितोऽयं रघुपतिपादसरोरुहेऽर्पितश्च ॥ इति

कमलाकरस्य पुत्रोऽनन्तभट्टस्तेन श्रीरामकल्पद्रुमप्रभृतयः पद्धतिग्रन्था बहवः कृताः । लक्ष्मणभट्टनिर्मिता अप्याचाररत्नप्रभृतयो ग्रन्थाः प्रसिद्धाः सन्ति । एवमग्रेऽप्यस्मिन्कुले महामहाविद्वांसस्तपस्विनः सत्पुरुषा उत्पन्नास्तेषामपि कीर्तिर्दिगन्तेषु विख्याताऽस्ति । तेषां प्रदर्शनायायं वंशवृक्षो लिखितस्तत्र ये साम्प्रतं वर्तन्ते तेषां नामसु प्रथमं श्रीशब्दः प्रयुक्तः ॥ ”

अत्र यानि पुस्तकानि यैश्च सुमनस्कतया प्रेषितानि तेषां नामादीनि संज्ञाश्च प्रकाश्यन्ते। तद्यथा

अ—डेक्कन कालेज संग्रहात्प्राप्तं ६३ अनुक्रमांकेन चिन्हितम्.

ब— ,, ,, ८८ ,, ,,

क— ,, ,, १२८ ,, ,,

ग— ,, ,, २६२ ,, ,,

द— ,, ,, २९८ ,, ,,

ध— ,, ,, ४१८ ,, ,,

न— ,, ,, १४२ ,, ,,

श—सत्पुरात् श्रीमद्बालाचार्यगजेंद्रगडकर इत्येतैः प्रेषितं श्री. माटे इत्येतेषां।

र—कलिकातारॉयल एशिआटिक सोसायटीतः प्राप्तम्।

ख—राजापुरपाठशालायाः संग्रहात्प्राप्तम्।

इ—आनन्दाश्रमसंग्रहादानीतम् ३७०६ इत्यनुक्रमांकेन चिन्हितम्

य—श्री सरदारविंचूरकर इत्येतेषां संग्रहात्प्राप्तम् १६६ ,, ,,

ट—पुण्यपत्तनस्थश्रीसरदार मेहेंदळे संग्रहात्प्राप्तम्

फ—फर्ग्युसन कॉलेज मंडलीकविभागात्प्राप्तम् अपूर्णं पृ. ४३

क्ष— ,, ,, ,, ,,

ह—श्री वाराणस्यां शिलाया मुद्रित.

परमुपकृतं नो यैरेतानिव दत्तानीतिशं।

जगन्नाथ रघुनाथ घारपुरे।

# अथ शांतिमयूखः प्रारभ्यते ।

## ( द्वादशः )

### श्रीगणेशायनमः॥

योऽ[1] लीलया संतनुतेऽत्र विश्वं । तत्पालयत्यात्मनि विश्वरूपे ॥ ५
लयं नयत्याशु च पूर्णरूपः । शिवं तनोत्वाशु रविर्ममासौ ॥ १ ॥
मंहोमहत्सनाराध्य समाकर्ण्य गुरोर्गिरः । समुद्यतो नीलकंठो वक्तुं शांतिकपौष्टिकं ॥ २ ॥
महोमयमुदाराभं लोकत्रयनमस्कृतम् । तमहं भास्करं वंदे सतां सर्वार्थसिद्धिदं ॥ ३ ॥
जज्ञे पितामहतनोः खलु कश्यपो यस्तस्मादजायत मुनिस्तु विभांडकाख्यः ।
तं पुत्रिणां धुरमरोपयदृष्यशृंगस्तस्यान्वयेऽप्यजनि शृंगिवराभिधानः ॥ ४ ॥ १०
तस्मिन्वंशे महति वितते सेंगराख्ये नृपाणां । राजा कर्णः समजनि यथा सागरे शीतरश्मिः ।
कीर्त्यां यस्य प्रथिततरया श्रोत्रजातेऽभिपूर्णे । कर्णस्यापि प्रविततकथा नावकाशं लभंते ॥५॥
विशोकाख्यदेवस्ततस्तत्सुतोऽभूद्विशोकीकृता येन सर्वा धरित्री ।
ततोऽप्यास राजाऽस्तशत्रुस्ततोऽभूद्दयाख्यो रयेणेव सर्वाहितघ्नः ॥ ६ ॥
बभूवाथ वैराटराजस्ततोऽभून्नृपो मेदिनी वल्लभो वीढराजः । १५
नरब्रह्मदेवस्ततो मन्युदेवस्ततोऽभून्नृपश्चंद्रपालाभिधानः ॥ ७ ॥
शिवगणाख्यनृपः समजन्यथो शिवगणाख्यपुरं प्रचकार यः ।
शिवगणेन समः सकलैर्गुणैः शिवशिवप्रथमो गणनासु यः ॥ ८ ॥
रौलिचंद्र इति तत्तनयोऽभूत्कर्मसेननृपतिस्तमथानु ।
लोकपो नरहरिर्नृपराजो रामचंद्र इति तत्तनुजातः ॥ ९ ॥ २०
यशोदेवस्ततो जातस्ताराचंद्रनृपस्ततः । चक्रसेनस्ततो राजा रार्जेसिंहनृपो यतः ॥ १० ॥
ततोऽप्यभूद्भूपतिसाहिदेवः स्वकीर्तिभिर्निर्जितदुग्धसिंधुः ।
अभूत्ततः श्रीभगवंतदेवः सदैव भाग्योदयवान् क्षितीशः ॥ ११ ॥
यद्दानद्रविणाद्रिनिर्जितवपू रत्नाचलो लज्जया ।
दूरे स्तब्ध इलावृते निविशते नो यत्र पुंसां गतिः ॥ २५
किंच त्रस्यदरातिवामनयनानेत्रांबुभिर्वर्द्धित-
स्तेजोभिर्वडवामुखोत्थहुतभुक्तुल्यः कथं नो भवेत् ॥ १२ ॥

---

१ क्ष–श्रीकाशीविश्वेश्वराभ्यां नमः । श्रीकालभैरवाय नमः । घख श्रीसरस्वत्यै नमः । ई–श्रीरविर्जयति । फ–श्री लक्ष्मीकेशवाय नमः । २ खडयरदइअकक्ष पाठः । ३ इ–रुरम् । ४ ई–विशेखो । ५ द–जय । ६ इ–ख्यो ।

आज्ञप्तस्तेन राज्ञा विबुधकुलमणिर्दाक्षिणात्यावतंसो
भट्टश्रीनीलकण्ठः स्मृतिषु दृढमतिर्जैमिनीयेऽद्वितीयः ।
आज्ञामादाय मूर्ध्ना सविनयममुना तस्य सर्वान्निबधान्
दृष्ट्वा सम्यक् विविच्य प्रविततकिरणस्तन्यते भास्करोऽयं ॥ १३ ॥
५ प्रेतारकैरादृतमत्र किंचिन्मया तु निर्मूलतया तदुज्झितं ।
ऊनोक्तिताऽतो न हि तेन काचित्सपुष्पहीनाऽपचितिर्न हीयते ॥ १४ ॥
संस्काराचारकालाः समुचितरचना श्राद्धनीती विवादो
दानोत्सर्गप्रतिष्ठा जगति जयकराः संगतार्थानुबद्धाः ।
प्रायश्चित्तं विशुद्धिस्तदनु निगदिता शान्तिरेवं क्रमेण
१० ख्याता ग्रंथेऽत्र शुद्धे बुधजनसुखदा द्वादशैते मयूखाः ॥ १५ ॥
भगवद्भास्कराख्ये ग्रंथेऽस्मिन् शिष्टसमते च तत ।
शान्तिविवेकमयूखः प्रतन्यते नीलकण्ठेन ॥ १६ ॥

अस्पष्टपापविशेषनिदानकैहिकमात्रानिष्टनिवर्तकं पापाप्रयोजकं वैधं कर्म शान्तिकं । क्षयादिहरदानादावतिप्रसङ्गं वारयितुं निदानकांतं । आमुष्मिकानिष्टनिवर्तकं[1] तं वारयितु-
१५ मैहिकेति । प्रायश्चित्तं वारयितुं मात्रपदं । प्रायश्चित्तं त्वामुष्मिकानिष्टनिवर्तकमपि । अभिचारप्रत्यभिचारादौ वारयितुं पापाप्रयोजकमिति । तयोः फलतो हिंसात्वेन तदनुष्ठाने प्रायश्चित्तोक्तेश्च पापप्रयोजकत्वात् । अनिष्टनिवर्तकत्वं च शान्तिकस्य तन्निदानपापनाशरूपसामग्रीविघटकत्वेन पुष्टिफलकं वैधं कर्म पौष्टिकं ।

## तत्र परिभाषा ।

२० मार्कंडेयपुराणे ( अ. ३१ श्लो. ५६ )
"शिरःस्नातश्च कुर्वीत दैवं पित्र्यमथापि वा । प्राङ्मुखोदङ्मुखो वाऽपि श्मश्रुकर्म च कारयेत् ॥"
तत्रैव ( अ. ३१ श्लो. ६४।६५ )
"देवार्चनादिकर्माणि तथा गुर्वभिवादनं । कुर्वीत सम्यगाचम्य प्रयतोऽपि सदा द्विज ॥"
बृहन्मनुः "प्राणानायम्य कुर्वीत सर्वकर्माणि संयतः ॥" मार्कंडेयः "संकल्प्य
२५ विधिवत्कुर्यात्स्नानदानव्रतादिकं ॥" देवलः
"मासपक्षतिथीनां च निमित्तानां च सर्वशः । उल्लेखनमकुर्वाणो न तस्य फलभाग्भवेदिति ॥"
मासपक्षतिथयः प्रयोगाधिकरणभूताः सर्वेऽपि ।

यत्तु अनेकदिनसाध्यकर्मण्याद्यदिने संकल्पकालीनां तिथिमधिकरणत्वेनोल्लिख्य ज्योतिष्टोमेनाह यक्ष्ये इत्यादिसंकल्पवाक्यं प्रयुंजते याज्ञिकाः तत् पदानामन्वयायोगादनादर्तव्यं ।
३० यदपि केचित्तेन तेन रूपेण ग्रंथे मासतया विहितानामेव मासादीनामुल्लेख इति तदपि न ।

---

१ यदकखदडजक्षझ पाठः २ ड-विमर्श । शान्तिपुष्टिमयूखः । ३ क्ष-ति । ४ क्षझयनच फकझर-क । ५ क्ष-त्त । ६ कार्याणि ति मुद्रितपाठः । ७ 'तदनन्तरमुत्तिकयाम्' इत्यपरः पाठः । ८ दक्षध-ला ।

मानाभावात् । अविहितमासादिकं आधानादौ मासपक्षतिथीनां ज्योतिष्टोम एकादशीव्रतादौ च मासपक्षयोरुल्लेखाभावप्रसंगाच्च । अतो ज्योतिष्टोमादावेकादश्यादिपूर्णिमातानामुल्लेख । एव-मन्यत्रापीति दिक् ।

अत्र च शूद्राणामप्यधिकारः । "श्रावयेच्चतुरो वर्णान्कृत्वा ब्राह्मणमग्रत" इत्यादि वाक्येषु श्रावणस्य भृत्यर्थतया रागप्राप्तत्वेन तद्विधौ वाक्यवैयर्थ्यापत्तेर्नियमविवक्षया श्रवणविधाना- ५ त्तेषां पुराणश्रवणेऽधिकारेण ज्ञानसद्भावात् ।

वैदिकमंत्राभावे कथं तद्वस्तुकर्मस्वधिकार इति चेत् शृणु

"धर्मेप्सवस्तु धर्मज्ञाः सतां धर्ममनुष्ठिताः । मंत्रवर्ज्यं न दुष्यंति प्रशंसां प्राप्नुवंति चेति ॥' मनुना मत्रवर्जनात् (अ १०श्लो १२७)। यत्तु मेधातिथिर्मत्रवर्जितेपूपवासादिष्वधिकारार्थमिदं न तु समंत्रकेषु मंत्रपर्युदासेनाधिकारार्थमिति तन्न । अमंत्रकोपवासादिषु १० श्रवणविधिनैवाधिकारसिद्धावेतद्वाक्यानर्थक्यापत्तेः । अत एव मोक्षधर्मेऽपि "मंत्रवर्ज्यं न दुष्यंति कुर्वाणाः पौष्टिकीं क्रियामिति" अनेतद्वाक्यस्य पौराणत्वेन तत्सामान्योप-स्थितपौराणक्रियोद्देशेन मंत्रवर्जनविधौ पौष्टिकीमिति यस्योद्देश्यविशेषणत्वेनाविवक्षितत्वं । एवं मनुवाक्यस्यैतस्य चैवैव श्रुतिमूलत्वेन कल्प्यते । गृह्यपरिशिष्टे "आदौ विनायकः पूज्यः अंते तु कुलदेवता" । शौनकः १५

"पुण्याहवाचनविधिं वक्ष्यामोऽथ यथाविधि । प्रयोक्तुः कर्मणामादावंते चोदयसिद्धये" ॥

कर्मप्रदीपे

"कर्मादिषु तु सर्वेषु मातरः सगणाधिपाः । पूजनीयाः प्रयत्नेन पूजिताः पूजयंति ताः ॥

"प्रतिमासु च शुद्धासु लिखित्वा वा पटादिषु । अपि वाऽक्षतपुंजेषु नैवेद्यैश्च पृथग्विधैः ॥

"कुड्यलग्नां वसोर्धारां सप्तवारं घृतेन तु । कारयेत्पंचधारां वा नातिनीचां न चोच्छ्रिताम् ॥ २०

"आयुष्याणि च शांत्यर्थं जप्त्वा तत्र समाहितः । षड्भ्यः पितृभ्यस्तदनु श्राद्धदानमुपक्रमेदिति"॥

षड्भ्य इति कातीयच्छंदोगपरं । अन्येषां तु नवदैवत्यं ।

"अन्वष्टकासु वृद्धौ च गयायां च क्षयेऽहनि । अत्र मातुः पृथक् श्राद्धमन्यत्र पतिना सहेति॥" वचनात् । सर्वत्राचार्यो यजमानसमशाखीय एव । अन्यथाऽऽचार्यस्य यजमानशाखा-ध्ययनाभावे तच्छाखीयपदार्थानां निर्वाह एव न स्यात् । स्वशाखायाऽननुष्ठाने तु वैगुण्य । तथा च २५ पराशरः

"यः स्वशाखां परित्यज्य परशाखां समाश्रयेत् । अप्रमाणमृषिं कृत्वा सोऽन्धे तमसि मज्जतीति ॥" ऋत्विजस्तु भिन्नशाखीया अपि । सर्वेऽप्याचार्यब्रह्मर्त्विजो मधुपर्केण पूज्यः । 'ऋत्विजो वृत्वा मधुपर्कमाहरेत्" इत्याश्वलायनोक्ते (१।२४)। "सपूज्य मधुपर्केण ऋत्विजः कर्म कारयेदिति" विश्वामित्रोक्तेश्च । यो ऋत्विक् यच्छाखीयं कर्म करोति तच्छाखास्केन प्रकारेण ३० काण्डानुसमयेन मधुपर्कं कुर्वीत यायजूका केचित् । ये वै यजमानशाखोक्तेन । यजमानेन

१ ह्न–नैपर्ण्यापत्ते– । २ इ कयइडक्ष–विधिना । ३ क्षइकयदद्व–णाधिकारेण । ४ यइ–अज्ञान । ५–पृ ८३१प २०–३० । ६ डयदअक्षकइघ–पर्युदासार्थमिति । ७ पधनकइदफ–ष्वपि । क्षड–ष्विति । ८ डयकदधफ–क्षित । ९ क्षअदक–यानुशने, हफन चैत्तानुशने । १० मीम सा अ ५ । ११न–पाठ ।

स्वशाखीया ऋत्विग्भिश्च स्वस्वशाखीयाः पदार्थाः । अनेकेषु ऋत्विक्षु पदार्थानुसमयेनानुष्ठेया इति न युक्तं । तत्तच्छासाध्ययनजन्यज्ञानस्यांगत्वादेकप्रयोगविधिपरिग्रहाच्च । ऋत्विग्भ्यो देयमुक्तं लिंगपुराणे

" वस्त्रयुग्मं तथाऽपूर्वं केयूरं कर्णभूषणं । अंगुलीभूषणं चैव मणिबंधस्य भूषणं ॥

५ "कंठाभरणयुक्तानि प्रारंभे धर्मकर्मणः। पुरोहिताय दत्वाऽथ ऋत्विग्भ्यश्चापि दापयेदिति ॥"[1]

आपः पूर्यतेऽस्मिन्नित्यपूरं जलपात्रं । मत्स्यपुराणे

" यजमानः सपत्नीकः पुत्रपौत्रसमन्वितः । पश्चिमद्वारमाश्रित्य प्रविशेद्यागमंडपं ॥ "[1]

संग्रहे " समंततश्च सिद्धार्थान् किरेद्रक्षोघ्नमंत्रतः " । प्रतिष्ठासारे

" सर्वतः पंचगव्येन प्रोक्षयेद्यागमंडपं । आपो हि ष्ठा तृचेनैव ततः स्वस्त्ययनं जपेत् ॥"

१० अत्र हेमाद्रौ वास्तुपूजाऽप्युक्ता

" समंडपं प्रविश्याथ तोरणादि प्रपूज्य च । वास्तुयागं ततः कुर्यात्प्रासादे मंडपेऽथ वा ॥ "

" वास्तुमंडले च नैर्ऋत्यां दिशि वास्त्वीशं ब्रह्मादींश्च समर्चयेदिति " शारदोक्तेः । वास्तुहोमस्तु भिन्नस्थंडिले कार्यः । मुख्यायतने वा । तत्राप्यादौ पृथक्प्रयोगतया प्रधानसमतंत्रतया वा । शारदातिलके तु होम एव नोक्तः । सर्वं च शांतिकं पौष्टिकं महादानादि लौकिकाग्नौ

१५ कार्यं । श्रौतस्मार्ताग्निप्राप्तौ मानाभावात् । यत्तु मनुः ( अ. ३ श्लो. ६७ )

"वैवाहिकेऽग्नौ कुर्वीत गार्ह्यं कर्म यथाविधि । पंचयज्ञविधानं च पंक्तिं चान्वाहिकीं गृहीति॥"

तत्पदं गृह्योक्तपरं। वैवाहिक इति च दारदायकालिकयोरप्युपलक्षकं । तत्सजातीयसंस्कारस्यैव साधनतावच्छेदकत्वात् । यदपि याज्ञवल्क्यः ( आचारे ९७ )

" स्मार्तं कर्म विवाहाग्नौ कुर्वीत प्रत्यहं गृही । दायकालाहृते वापि श्रौतं वैतानिकाग्निष्विति।"

२० तत्रापि सामान्यं स्मार्तपदं गार्ह्यं उपसंह्रियते । एतेनाहवनीयादयो निरस्ताः । याहवनीये जुह्वतीत्यादावश्वप्रतिग्रहेष्टौ वैदिकत्वसाम्येन वैदिकाश्वदानप्रतिग्रहोपस्थितिवत् वैदिकहोमोपस्थितेश्च । यद्यप्यत्र गार्ह्यं स्मार्तं एव श्रौतं च वैतानिक एवेति नियमेन स्मृत्युक्तेऽपि कर्मणि श्रौतस्मार्ताग्न्योः प्राप्तिः संभाव्यते तथापि न आहवनीयत्वाद्यवच्छिन्नत्वादिरूपेण किंतु लौकिकसाधारणज्वलनत्वेनैव । अवैधाहुतिप्रक्षेपे आहवनीयत्वादिविघातापत्तेश्च । अत एव

२५ सर्वाधानिन औपासनाभावाद्वैतानिकाप्राप्तेश्च तेन गार्ह्यं लौकिक एव कार्यं । अमुमेव सर्वमर्थं स्मृत्यर्थसारकृदपि संजग्राह

" गार्ह्यमौपासने कुर्यात्सर्वाधानी तु लौकिके । स्मार्तं च लौकिके कुर्याच्छ्रौतं वैतानिकाग्निष्विति॥"[2]

यत्तु नारायणवृत्तौ " सर्वाधानिना सीमंतोन्नयनादिगार्ह्यकर्मार्थं स्मार्ताग्निरुत्पादनीयः"

इति तत्र मूलमन्वेष्यं । यदपि विज्ञानेश्वरो ग्रहयज्ञ औपासन इत्यूचे तत्रापि मूलमन्वेष्यं

३० कातीयपरं वा । तत् तत्सूत्रे तथाम्नानात् । अत एव स विनायकशांतौ लौकिकाग्निमेवावोचत् । अतः स्मृत्युक्तं लौकिक एवेति । कृत्यरत्नाकरे

---

१ क्षफनघकखअ–राक्षोन । २ झ–ले । ३ झ–र्ती ।

"शुभपात्रं तु कार्यं स्यात्तेनाग्निं प्रणयेद् बुधः । तस्याभावे शरावेण नवेनाभिमुखं च तं"॥ गोभिलीये "आहूय चैव होतव्यो यो यत्र विहितोऽनलः" । तथा
"लक्षहोमे च वन्हिः स्यात्कोटिहोमे हुताशनः । पूर्णाहुत्या मृडो नाम शांतिके वरदः सदा ॥"
अन्येपु संस्कारादिकर्मस्वग्नेर्नामविशेषाः प्रयोगरत्ने ज्ञेयाः । होमे विशेषो गोभिलीये
"न मुक्तकेशो जुहुयान्नानुपातितजानुकः । उत्तानेनैव हस्तेन अंगुष्ठाग्रेण पीडितं ॥ ५
"संहताङ्गुलिपाणिस्तु वाग्यतो जुहुयाद्धविरिति" ॥ बहुकर्तृके होमे प्रत्याहुतित्यागाशक्तौ होमारंभ एव सर्वा देवतास्तत्तुर्थ्यतेनोद्दिश्य सर्वाणि द्रव्याणि त्यजेदिति हेमाद्र्यादयः ।

इति परिभाषा ।

---

## अथ विनायकस्नपनं ।

याज्ञवल्क्यः ( आचारे २७१–२७४ ) १०
"विनायकः कर्मविघ्नसिद्ध्यर्थं विनियोजितः । गणानामाधिपत्ये च रुद्रेण ब्रह्मणा तथा ॥
"तेनोपसृष्टो यस्तस्य लक्षणानि निबोधत ।
"स्वप्नेऽवगाहतेऽत्यर्थं जलं मुण्डांश्च पश्यति । काषायवाससश्चैव क्रव्यादांश्चाधिरोहति ।
"अन्त्यजैर्गर्दभैरुष्ट्रैः सहैकत्रावतिष्ठति । व्रजन्नपि तथाऽऽत्मानं मन्यतेऽनुगतं परैः" ॥
उपसृष्टः उपद्रुतः । स्वप्ने स्रोतसाऽपह्रियते । तत्र मज्जति वा । न त्ववगाहनमात्रं विवक्षितं । १५
तस्य शुभसूचकत्वात् । अन्त्यजैश्चंडालैः । प्रत्यक्षलक्षणान्याह ( आचारे २७४–२७६ )
"विमना विफलारंभः संसीदत्यनिमित्ततः । तेनोपसृष्टो लभते न राज्यं राजनंदनः ॥
"कुमारी नैव भर्तारमपत्यं गर्भमंगना । आचार्यत्वं श्रोत्रियश्च न शिष्योऽध्ययनं तथा ॥
"वणिक् लाभं च नाप्नोति कृषिं चापि कृषीवलः" ॥ संसीदति कारणं विना दीनमनस्को भवति । एतदुपलक्षणं यस्य यदिष्टं ॥ चेदिष्टसामग्रीसत्वे तन्न प्राप्नोति तदा तदुपद्रुतो २० बोध्यः । एतदुपद्रवपरिहारार्थं कर्माह । ( आ° २७७ ) "स्नपनं तस्य कर्तव्यं पुण्येऽह्नि विधिपूर्वकं" । अत्र पुण्येऽह्नीत्यविशेषेऽपि विशेषोऽपरार्के ( पृ° ५६३ ) भविष्ये
"शुक्लपक्षे चतुर्थ्यां च वारेण धिषणस्य च । तिष्ये च वीरनक्षत्रे तस्यैव पुरतो नृपेति ॥"
स्नानादौ देवतापूजोक्ता तत्रैव ( पृ° ५६४ )
"व्योमकेशं तु संपूज्य पार्वतीं भीमजं तथा । कृष्णस्य पितरं केतुं अर्कमारं सितं तथा ॥ २५
"धिषणं क्लेदपुत्रं च कोणं लक्ष्मं च भारत । विधुतुदं बाहुलेयं नदकस्य च धारिणमिति ॥"
व्योमकेशः शिवः । भीमजो गणेशः । आरो भौमः । सितः शुक्रः । धिषणो गुरुः । क्लेदपुत्रो बुधः । कोणः शनैश्चरः । लक्ष्मं तद्वाश्चंद्रः । बाहुलेयः स्कंदः । नदकधारी कृष्णः ।
"गौरसर्षपकल्केन साज्येनोत्सादितस्य च । सर्वौषधैः सर्वगंधैर्विलिप्तशिरसस्तथा ॥ ३०

---

१ ह्य–ति फ–पि । २ ह्य–मुडाश्च । ३ ह्य–पत्यदन । ४ ह्य–+च । ५ फदन–हेमाद्रौ । ६ 'ताते' इति अपरार्कीयपाठ ।

"भद्रासनोपविष्टस्य स्वस्ति वाच्या द्विजैः शुभाः॥" गौरसर्षपपिष्टेन गोघृतयुक्तेनोत्सादित-स्योद्वर्त्तितस्य । सर्वौषधानि छंदोगपरिशिष्टे

" कुष्टं मांसी हरिद्रे द्वे मुराशैलेयचंदनं । वचा कर्चूरमुस्ते च सर्वौषध्यः प्रकीर्त्तिताः ॥" इति ॥ सर्वगंधैश्चंदनकुंकुमागरुकस्तूरिकाजातीफलादिभिः । वेद्यां सितवस्त्रप्रच्छादितश्रीपर्णीपीठं
५ भद्रासनं । स्वति वाच्याः स्वति वाचनीयाः । ब्राह्मणद्वारा स्वस्ति वाचनं कारयेदित्यर्थः ।

" अश्वस्थानाद्गजस्थानाद्वल्मीकात्संगमाद्ध्रदात् । मृत्तिकां रोचनां गंधं गुग्गुलं चाप्सु निक्षिपेत् ॥.

" या आहृता एकवर्णैश्चतुर्भिः कलशैर्ह्रदात् । चर्मण्यानडुहे रक्ते स्थाप्य भद्रासनं ततः॥"

आनडुहं चर्म च वेद्यां प्राग्ग्रीवमूर्ध्वलोम च स्थाप्यमिति विज्ञानेश्वरः। या आपः ते चत्वारोऽपि कलशा भद्रासनात्पूर्वादिचतुर्दिक्षु स्थाप्या इति सांप्रदायिकाः । पूर्वादिदिक्चतुष्टयावस्थित-
१० कलशोदकेनाभिषेकक्रमेण मंत्रानाह

" सहस्राक्षं शतधारमृषिभिः पावनं कृतं । तेन त्वामभिषिंचामि पावमानीः पुनंतु ते ॥

" भगं ते वरुणो राजा भगं सूर्यो बृहस्पतिः । भगमिंद्रश्च वायुश्च भगं सप्तर्षयो ददुः॥

" यत्ते केशेषु दौर्भाग्यं सीमंते यच्च मूर्द्धनि । ललाटे कर्णयोरक्ष्णोरापस्तद्घ्नंतु ते सदा ॥ "

सहस्राक्षं बहुशक्तिकं । पावमानी इत्यनंतरमाप इति शेषः । भगं कल्याणं । दौभार्ग्य
१५ कल्याणं उदग्दिग्वस्थितेनाभिषेके पूर्वोक्तास्त्रय एव मंत्राः । सर्वैश्चतुर्थमिति विज्ञानेश्वरोक्त-लिंगात् । किंच

" स्नातस्य सार्षपं तैलं स्रुवेणौदुंबरेण तु । जुहुयान्मूर्द्धनि कुशान् सव्येन परिगृह्य च ॥"

सव्यपाणिगृहीतकुशांतर्हिते सार्षपं तैलमुदुंबरनिर्मितेन स्रुवेण यजमानमूर्द्धनि जुहुयादाचार्यः ।

" मितश्च संमितश्चैव तथा शालकटंकटौ । कूष्मांडो राजपुत्रश्चेत्यंते स्वाहासमन्वितैः ॥
२० " नामभिर्बलिमंत्रैश्च नमस्कारसमन्वितैः ॥ "

स्वाहेति स्वाहेति चतुर्थी । एतानि षट् विनायकनामानि इति विज्ञानेश्वरः ( पृ. ८५. पं. ८ )। अपरार्कस्तु शालकटंकट इत्येकवचनांतं पपाठ । तेन तन्मते पंचैवाहुतयो भवंति । अत्र लौकिकेऽग्नौ स्थालीपाकविधिना चरुं कृत्वा तेभ्य एवाहुतिषट्कं हुत्वेंद्रादिदशलोकपालेभ्यस्तत्तन्नाम्ना बलिं दद्यात् इति मिताक्षरायां ( पृ. ८५ पं १०-१२ ) । तत्र चरुहोमे इंद्रादिभ्यो बलि-
२५ दाने च मूलं चिंत्यं । अंते स्वाहासमन्वितैर्नामभिर्जुहुयात् । नमस्कारसमन्वितैश्चेंद्रादिभ्य एव बलिं दद्यादिति वक्ष्यमाणेन संबध्यत इति तु युक्तं ।

" दद्याच्चतुष्पथे शूर्पे कुशानास्तीर्य सर्वशः । कृताकृतांस्तंडुलांश्च पललौदनमेव च ॥

" मत्स्यान्पक्वांस्तथैवामान्मांसमेतावदेव तु । पुष्पं चित्रं सुगंधिं च सुरां च त्रिविधामपि ॥

" मूलकं पूरिकापूपांस्तथैवोंडेरकस्रजः । दध्यन्नं पायसं चैव गुडपिष्टं समोदकं ॥
३० " एतान्सर्वान्समाहृत्य भूमौ कृत्वा ततः शिरः" । कृताकृतान्सकृदवहतान् । पललौदनः ।

१ याज्ञवल्कीये आचारे २७९।२८० । २ पृ. ८३ पं. २७-२८ । ३ क्ष-दिङ्नयं । ४ या० आचारे २८१-२८३ । ५ "सर्वदा" इति याज्ञवल्कीये पाठः । ६ पृ. ८५ पं. १२ । ७ या. आचारे २८४ । ८ या. आ. २८५-२८६ । ९ व्याकरण अ० २ पा. ३ सू० १६ । १० याज्ञवल्कीये आचारे २८६-२८९ ।

तिलपिष्टं मिष्ट ओदन इति मिताक्षरायां । अपक्वमांस मिश्रओदन इति तु युक्त। "पलल क्रव्यमामिषमिति" कोशात् (अमरकोशे २।७३२) । आमानपक्वान् । मांसमेतावदेव तु । पक्वमपक्वमासमन्यादित्यर्थ । त्रिविधा सुरा गौडी पैष्टी माध्वी च । मूलकं कंदाकारो भक्ष्यविशेष इति मिताक्षरायां (पृ. ८५ प. २३)। स्वरूपत एव ग्राह्यमिति तु युक्तं। उभयमपि ग्राह्यमिति महार्णवे। अपूपा स्नेहपक्वा गोधूमविकारा इति विज्ञानेश्वर. (प २४)। ५
उंडेरकाः पिष्टविकारा नानाविधास्ते मज इत्युच्यते। गुडपिष्ट गुडमिश्र शाल्यादिपिष्ट । अत्र सुरामासं चाब्राह्मणाविषय । ब्राह्मणैस्तु मांससुरास्थाने तु सलवण पायसं दुग्धं च ग्राह्यं ।

"पायस लवणोपेत मासस्थाने प्रकल्पयेत् । दुग्ध लवणसंमिश्र सुरास्थाने प्रकल्पयेदिति" ॥ स्मरणादिति महार्णवादिषु । विनायकाम्बिकागायत्रीभ्या विनायकमंबिका च नमस्कृ य पूर्वोक्तद्रव्यजात तयोरग्रत उपहृत्य तच्छेष शूर्पे निधाय चतुष्पथे शूर्पं संस्थाप्य बलि दद्यादिर्तर्मंत्रै　१०

"बलि गृण्हत्विम देवा आदित्या वसवस्तथा । मरुतोऽथाश्विनौ रुद्रा सुपर्णाः पन्नगा ग्रहा ॥
"असुरा यातुधानाश्च पिशाचा मातरोरगा । शाकिन्यो यक्षवेताला योगिन्य पूतनाशिवा ॥
"जंभका सिद्धगंधर्वा नागा विद्याधरा नगा । दिक्पाला लोकपालाश्च ये च विघ्नविनायकाः ॥
"जगता शांतिकर्त्तारो ब्रह्माद्याश्च महर्षय । मा विघ्नं मा च मे पाप मा सतु परिपंथिन ॥
"सौम्या भवतु तृप्ताश्च भूतप्रेता सुखावहा." ॥ दद्यादित्यत्रापि देहलीदीपवदन्वेति ॥　१५

"विनायकस्य जननीमुपतिष्ठेत्ततोऽबिका । दूर्वासर्षपपुष्पाणा दत्वाऽर्घ्यं पूर्णमजलि ॥"
अनंतरं विनायकमंबिकां च दूर्वांजलिमर्घं च दत्वोपतिष्ठेत । उपस्थानमंत्रमाह

"रूप देहि यशो देहि भग भवति देहि मे । पुत्रान् देहि धनं देहि सर्वान् कामाश्च देहि मे ॥"
भगवतित्यूह्य विनायकमप्युपतिष्ठेतेति विज्ञानेश्वर[1] (पृ ८६ प ३) । अत्र मदन विनायकोपस्थान कृ वाऽबिकोपस्थान कार्यमित्याह । किंच　२०

"तत शुक्लाबरधर शुक्लमाल्यानुलेपन । ब्राह्मणान् भोजयेद्दद्याद्वस्त्रयुग्मं गुरोरपि ॥"
गुरोराचार्याय । अपिशब्दाद्दक्षिणामपि । एवंविध कर्म कुर्वत फलमुक्त (आचारे २९३)

"एव विनायक पूज्य ग्रहांश्चैव विधानतः । कर्मणा फलमाप्नोति श्रियमाप्नोत्यनुत्तमा ॥"
अस्या कर्मांगत्वेन पौष्टिकत्वेन च वर्णचतुष्टयस्याप्यत्राधिकार । शूद्रस्य तु मत्रवर्ज । तान्प्रक्रम्य

"मंत्रवर्जं न दुष्यति कुर्वाणा पौष्टिकीं क्रियामिति" मोक्षधर्मश्रवणादिति वदति । २५
महार्णवोऽपि यजमानस्तु शूद्रश्चेदिति वदन् तस्याधिकारमभिप्रैति ।

इति विनायकशांति ।

---

१ क्षडफद-इमे । २ दनइक्षघफ-तृभग्र ।

## अथ प्रयोगः

कर्त्ता देशकालौ संकीर्त्य विनायकोपसर्गनिवृत्यर्थममुककर्मणो निर्विघ्नतासिद्ध्यर्थं वा विनायकस्नपनं करिष्य इति संकल्पयेत् । ततः पुण्याहवाचननांदीश्राद्धांतं यथोक्तं कुर्यात् । अपरे पुण्याहवाचनं नेच्छंति । अग्रे तस्य कर्तव्यत्वात् । अथाचार्यं ऋत्विक्चतुष्टयं च वृणुयात् ।
५ ऋत्विजो न संतीति केचित् । तदाचार्य एव वक्ष्यमाणमभिषेकं कुर्यात् । यजमानः प्रतिमास्वक्षत-पुंजेषु वा शिवं पार्वतीं गणेशं वसुदेवं केतुं अर्कं सोमं शुक्रं गुरुं बुधं शनिं चंद्रं राहुं स्कंदं कृष्णं चावाह्य पूजयेत् । तथाऽऽचार्यः पंचवर्णचूर्णैः पूर्वादिचतुर्दिक्षु चत्वारि मध्यस्थवेद्यां चैकमिति स्वस्तिक-पंचकमालिख्य मध्यस्थस्वस्तिकोपरि आनडुहं रक्तं चर्म प्राचीनग्रीवमूर्ध्वलोम संस्थाप्य तस्योपरि श्रीपर्णीपीठं संस्थाप्य सितेन वाससा संच्छादयेत् । एतद्भद्रासनमिति । अथ चतुर्षु स्वस्तिकेषु
१० पूर्वादिदिक्षु चत्वारोऽपि ऋत्विजः कलशान् संस्थापयेयुः । आचार्यो वा । तत्रायं प्रकारः । "मही[1] द्यौः पृथिवी च नेति" भूमिं स्पृशन् संप्रार्थ्य "ॐ धान्यमसि[2] इति" यवान् क्षिप्त्वा "आकलशेष्विति" तेषु कलशं संस्थाप्य "इमं मे[3] गंगेति" तीर्थोदकेनापूर्य "गंधद्वारामिति" चंदनागरुकस्तूरीपूरकारोचनादीन् गंधादीन् गुग्गुलं च निक्षिपेत् । "या ओषधी-रिति" सर्वौषधीः । 'ओषधयः समिति' यवान् "कांडात्कांडादिति" दूर्वाः ।
१५ "अश्वत्थेव" इति पंचपल्लवान् । "स्योनापृथिवीत्यनेन" "उद्धृतासि वराहेण कृष्णेन शतबाहुना । मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतमित्यनेन" पंचमृदः क्षिपेत् । "याः फलिनीरिति" फलं । "स हि रत्नानीति" पंचरत्नानि । "हिरण्यरूप[11] इति हिरण्यं । "युवा सुवासा" इत्यनेन वस्त्रेण रक्तसूत्रेण च वेष्टयेत् । "पूर्णादर्वीति" धान्यपूर्णपात्रं कलशोपरि निदध्यात् । अत्र च वरुणावाहनपूजने अपि केचिदाहुः । ततः कलशे "सर्वे समुद्राः" इति
२० गंगाद्यावाहनं । ततः कुंभाभिमंत्रणं

"कलशस्य मुखे विष्णुः कंठे रुद्रः समाश्रितः । मूले त्वस्य स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥
"कुक्षौ तु सागराः सर्वे सप्तद्वीपा वसुंधरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥
"अंगैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥" इति । ततः कुंभप्रार्थना
"देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुंभ विधृतो विष्णुना स्वयं ॥
२५ "त्वत्तोये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठंति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥
"शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः ।
"आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः । त्वयि तिष्ठंति सर्वेऽपि यतः कामफलप्रदाः ॥
"त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव । सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदेति ॥"

---

१ या आचारे २९१ । २ ह्रक्षयइकडफदअर–भगवति । ३ इयदअ–आचार्यः । ऋ. सं. १।२।६ । ४ ऋ. सं. ८।५।११ । ५ ऋ. सं. ६।८।७ । ६ ऋ. सं. ८।३।६ । ७ ऋ. सं. ८।५।११ ८ ऋ. सं. ८।५।८ । ९ ऋ. सं. ४।४।२५ । १० ऋ. सं. २।७।२३ । ११ ऋ. सं. ३।१।१ । १२ अह्यफकयइरस–मत ।

तत ऋत्विज " आनो भद्रा " इति शातिसूक्त पठेयुरीति केचित् । आनोभद्रेतिशातिसूक्तस्य राहूगणो विश्वेदेवास्त्रिष्टुप् आद्या पच पच सप्तमी च जगत्य षष्ठी विराट्स्थानेपास्त्रिष्टुभ शाति सूक्तजपे विनियोग । आ नो भद्रा शन्नोवात पवतामित्यादिको वा । तस्मिन्नेव समये आचार्यो भद्रासनस्योत्तरत ईशान्या वा वस्त्राच्छादितपीठादौ विनायकप्रतिमाम्बिकाप्रतिमा चाग्न्युत्तारणपूर्वं प्रतिष्ठाप्य षोडशोपचारै पूजयेदिति निबधकृत । तत्र विनायकमत्र ५

" गणाना त्वा गृत्समदो गणपतिर्जगती गणपत्यावाहने विनियोग । ॐ गणानां त्वा ॐतत्पुरुषाय विद्महे वक्रतुडाय धीमहि । तन्नो दति प्रचोदयादिति वा । गौर्यास्तु गौरीर्मिमाय दीर्घतमा उमा जगती गौर्यावाहने विनियोग । " गौरीर्मिमाय " ( ऋ॰ ॥ २।१।२२ )

"सुभगायै विद्महे काममालिन्यै धीमहि । तन्नो गौरी प्रचोदयादिति" । अत्र मिताक्षराया होमोऽभ्युक्त (पृ ८६ प ८) शिष्टाश्च कुर्वति । तस्मिन्नक्षेमाचार्यो गृह्योक्तविधिना कुडे स्थडिले १० वाऽग्निं प्रतिष्ठाप्य प्रादेशमात्र समिद्द्वयमादाय " अस्मिन्होम देवतापरिग्रहार्थमन्वाधान करिष्य " इति सकल्प्य ' चक्षुषी आज्येने " त्यतमुक्त्वा अत्र प्रधान मित समित शालकट कट कूष्माड राजपुत्र मेता प्रधानदेवता एकैकया चर्वाहुत्या यक्ष्ये । शेषेण स्विष्टकृत " मि यानुक्त्वाआवाद्ध्यात् । अत्रार्कमते तु पचैवाहुतयस्तन्मते त्वाधाने होमद्वये च तथैवानुसधेय । तत परिसमूहनादि- चक्षुष्प्रपणात कृत्वा गोघृतलोलीकृतेन गौरसर्षपकल्कनोद्वर्तिताग सर्वौषधिचूर्णै कस्तूरिकागरुचदना- १५ दिभिर्विलिप्तशिरस यजमानमाचार्यो भद्रासने उपवेशयेत् । ततो यजमान स्वस्तिवाचन कुर्यात् । अनतर रूपगुणशालिनीभि सुवासिनीभिर्नीराजन कारयेत् । ततो भद्रासनात्पूर्वदेशावस्थित कलशमादायाभिषिंचेदाचार्य । मत्रश्च

" सहस्राक्ष शतधारमृषिभि पावन कृत । तेन त्वामभिषिचामि पावमानी पुनतु ते ॥"

ततो दक्षिणदेशावस्थित कलशमादाय २०

"भग ते वरुणो राजा भग सूर्यो बृहस्पति । भगमिद्रश्च वायुश्च भग सप्तर्षयो ददुरि ॥" त्यनेना भिषिचेत् । तत पश्चिमदिगवस्थित कलशमादाय

" यत्ते केशेषु दौर्भाग्य सीमते यच्च मूर्द्धनि । ललाट केशयोरक्ष्णोरापस्त घ्नतु ते सदेति ॥" तत उदक्देशावस्थित कलशमादाय पूर्वोक्तैस्त्रिभिर्मत्रैरभिषिचेत् । वृद्धस्वराशरेणान्येऽपि मत्रा उक्ता

" एतद्वै पावन स्नान सहस्राक्षमृषिस्मृत । तेन त्वा शतधारेण पावमा य पुनतु मा ॥ २५

" शक्रादिदशदिक्पाला ब्रह्मेशौ केशवादय । आपस्ते घ्नतु दौर्भाग्य शातिं यच्छतु सर्वदा ॥

"सुमित्र्या न आप ओषधय सतु । दुर्मित्र्यास्तस्मै सतु । योऽस्मान् द्वेष्टि । य च वय द्विष्म ॥"

" समुद्रा गिरयो नद्यो मुनयश्च पतिव्रता । दौर्भाग्य घ्नतु ते सर्वे शातिं यच्छतु सर्वदा ॥

" पादगुल्फोरुजघासे नितबोदरनाभिषु । स्तनोरुबाहुहस्ताग्रग्रीवाअंसाक्षिसधिषु ॥

' नासाललाटकर्णभ्रूकेशातेषु च यत्स्थितम् । तदापो घ्नतु दौर्भाग्य शातिं यच्छतु सर्वदा ॥" ३०

इ येतैरप्यभिषिचेदिति केचित् । चतुर्थकलशाभिषेचन एवैते पठनीया ।

अथाचार्यो यजमानस्य पश्चिमतस्तिष्ठन् सव्यपाणिगृहीतकुशाग्रैर्हिने यजमान शिरसि औदुबरेण

---

१ ऋ॰ स॰ १।६।१५ । २ इगस्तध—आर गमनी । ३ क्षटयनइ—पूर्वे । ४ ऋ॰ स॰ २।६।२६ । ५ इ—तम्हाद्या ।

स्रुवेण सार्षप तैल जुहुयात् । " ॐ मिताय स्वाहा " यजमानो " मितायेद् न ममेति " त्यजेदेव सर्वत्रापि । ॐ समिताय स्वाहा । ॐ शालाय० ॐ कटकटाय० ॐ कूष्माडाय० ॐ राजपुत्रायेति ॥ अथाचार्योऽन्यर्चनाद्याज्यभागात कृत्वा चरुणा मितादिभ्य एव जुहुयाद्यजमानस्तु पूर्ववत्त्यजेत् । आचार्य्य स्विष्टकृदादिप्रणीताविमोकात कर्मशेष समापयेत् । यजमानस्त्वभिषेकशालायामिन्द्रादि

५ दशलोकपालेभ्यो नाम्ना दिक्षु विदिक्षु च बलीन् दद्यात् । एतानि अग्निस्थापनचरुहोमदिक्पाल-बलिदानानि मिताक्षरामनुरुध्योक्तानि । ततो " मिताय एष बलिर्न ममेति " पायसेन माषभक्तेन वा मितादिभ्यो बलिं दत्त्वा विनायकाम्बिकयोरग्रत सकृदवहततण्डुलाना मासेन तिलपिष्टेन वा मिश्रमोदनमत्स्यमास पक्वमपक्व च गौडी पैष्टी माध्वीति त्रिविधा सुरा च ब्राह्मणस्य मासस्थाने सलवण पायस सुरास्थाने सलवण दुग्ध चित्र पुष्प सुगन्धिद्रव्य मूलक पूरिका अपूपा उडेरक

१० स्रज दध्यन्न पायस गुडमिश्रतण्डुलादेपिष्ट मोदकाश्च पात्र सस्थाप्य " तत्पुरुषाय विद्महे " इति मन्त्रेण विनायकाय " सुभगायै विद्महे " इति मन्त्रेण चाम्बिकायै निवेदयेत् । अथाचार्यो नूतनशूर्पे सर्वमुपहारशेष सस्थाप्य चतुष्पथ गत्वा तत्र गोमयेनोपलिप्य कुशानास्तीर्य तत्र शूर्प प्राङ्मुख सस्थापयेत् । यजमानस्त्वेतैर्मन्त्रैर्बलिं दद्यात्

" बलिं गृह्णन्त्विमं देवा आदित्या वसवस्तथा । मरुतोऽथाश्विनौ रुद्रा सुपर्णा पन्नगा ग्रहा ॥

१५ " असुरा यातुधानाश्च पिशाचा मातरोरगा । शाकिन्यो यक्षवेताला योगिन्य पूतना शिवा ॥

" जृम्भका सिद्धगन्धर्वा नागा विद्याधरा नगा । दिक्पाला लोकपालाश्च ये च विघ्नविनायका ॥

" जगता शान्तिकर्तारो ब्रह्माद्याश्च महर्षय । मा विघ्न मा च मेऽपाय मा सन्तु परिपन्थिन ॥

" सौम्या भवन्तु तृप्ताश्च भूतप्रेता सुखावहा " इति । " देवादित्यवसुमरुदश्विरुद्रसुपर्णपन्नग-ग्रहासुरयातुधानपिशाचमात्रुरगशाकिनीयक्षवेतालयोगिनीपूतनाशिवजृम्भकसिद्धगन्धर्वनागविद्याधर-

२० नगदिक्पाललोकपालविघ्नविनायकजगच्छान्तिकर्तृब्रह्मादिमहर्षिभूतप्रेतभ्य इद न ममेति " त्याग ॥

तत शिरसा भूमिं गत्वा पुष्पयुतमर्घं " तत्पुरुषायेति " मन्त्रेण विनायकाय " सुभगायै " इत्यम्बिकायै च दद्यात् । ततो दूर्वासर्षपपुष्पाणा पूर्वोक्तविनायकमन्त्रेण विनायकायाञ्जलिं दद्यात् । अम्बिकायै तन्मन्त्रेण तथैव दद्यात् । ततो विनायकमम्बिका चोपतिष्ठेत् । मन्त्रस्तु

" रूप देहि यशो देहि भग भगवति देहि मे । पुत्रान् देहि धन देहि सर्वान्कामाश्च देहि मे ॥ "

२५ अस्मिन्मन्त्रे । " भग भगवन् देहि मे " इत्यूह्य विनायकमुपतिष्ठेत् । अनन्तर यजमान प्राङ्मुखोपविष्ट उदङ्मुखानाचार्यादीन् पूजयित्वा आचार्याय वासोयुगमरूपा ऋत्विग्भ्यश्चान्या यथाशक्ति दक्षिणा दद्यात् । तत " उत्तिष्ठ ब्रह्मणस्पते " इत्यनेन " यान्तु देवगणा " इत्यनेन च विनायकमम्बिका चोत्थाप्य विसृज्य प्रतिमादिसर्वा सामग्रीमाचार्याय दद्यात् । ततो यथा-शक्ति भूयसीं दक्षिणा दीनानाथेभ्यो दत्त्वा यथाशक्ति विनायकप्रीत्यर्थमम्बिकाप्रीतये च ब्राह्मणान्

३० भोजयित्वा सकल्प्य वा " यस्य स्मृत्या " इत्याद्युक्त्वा न्यूनातिरिक्त सर्वं सपूर्णमस्त्विति तान्स-प्रार्थ्य तैरनुज्ञात सुहृद्युतो भुञ्जीत ।

इति श्रीमच्छकरभट्टसूरिसूनुभट्टनीलकण्ठकृते भगवन्तभास्करे शान्तिमयूखे
विनायकशान्तिपद्धति समाप्ता ॥

---

१ नख—स्योनापृथिवीत्यनेन पञ्चमृद क्षिपेम् पृ ८५ । २ क्षद्र—चोपस्थाय क—परथाय ।

## अथ ग्रहयज्ञः ॥

स्कांदे

" देवदानवगंधर्वा यक्षराक्षसकिंनराः । पीड्यंते ग्रहपीडाभिः किं पुनर्भुवि मानवाः ॥
" शनैश्वरेण सौदासो नरमांसे नियोजितः । राहुणा पीडितो राजा नलो भ्रांतो महीतले ॥
" अंगारकविरोधेन रामो राष्ट्राद्विवासितः । अष्टमेन शशांकेन हिरण्यकशिपुर्हतः ॥ ५
" रविणा सप्तमस्थेन रावणो विनिपातितः । गुरुणा जन्मसंस्थेन हतो राजा सुयोधनः ॥
" पांडवा बुधपीडायां विकर्माणि नियोजिताः । पक्षेनोऽशमसा युद्धे हिरण्याक्षो निपातितः ॥
" एते चान्ये च बहवो ग्रहदोषैस्तु पीडिताः ॥ " याज्ञवल्क्यः ( आचारे ३०८ )
"ग्रहाधीना नरेंद्राणामुच्छ्रायाः पतनानि च । भावाभावौ च जगतस्तस्मात्पूज्यतमा ग्रहाः॥"

प्रयोगपारिजाते उत्पलपरिमले १०

" कार्यारंभेषु सर्वेषु प्रतिष्ठाऽस्तरेषु च । नववेश्मप्रवेशे च गर्भाधानादिकर्मसु ॥
" आरोग्यस्नानसमये संक्रांतौ रोगसंभवे । अभिचारे च यः कुर्याद्ग्रहपूजां विधानतः ॥
" सोऽभीष्टफलमाप्नोति निर्विघ्नेन न संशय ॥" इति ॥ याज्ञवल्क्यः ( आचारे २९५ )
"श्रीकामः शांतिकामो वा ग्रहयज्ञं समाचरेत् । वृष्ट्यायुःपुष्टिकामो वा तथैवाऽभिचरन्नपि ॥ "

मात्स्ये ( अ. ९३ श्लो. ५।६ ) १५

" ग्रहयज्ञस्त्रिधा प्रोक्तः पुराणश्रुतिकोविदैः । प्रथमोऽयुतहोमश्च लक्षहोमस्ततः परः ॥
" तृतीयः कोटिहोमस्तु सर्वकामफलप्रदः ।
" ग्रहस्योत्तरपूर्वेण मंडपं कारयेद्बुधः । रुद्रायतनभूमौ वा चतुरस्रमुदक्प्लवं ॥
"दशहस्तमथाष्टौ वा हस्तान्कुर्याद्विधानतः । तस्य द्वाराणि चत्वारि कर्तव्यानि विचक्षणैः"

स्कांदे २०

" नवग्रहमखे कुंडं हस्तमात्रं समं भवेत् । चतुरस्रमधोहस्तं योनिवक्त्रं समेखलं । "
योनिरेव वक्त्रं यस्य तत् । पुत्रादिकामनया तु योन्याद्याकारा अपि भवंति ।

" चतुरंगुलविस्तारा मेखला तद्वदुच्छ्रिता । " अत्र विशेषोपदेशादेकैव मेखला ।

मात्स्ये ( अ. ९ श्लो. १२४; १२५ )

"वितस्तिमात्रा योनिः स्यात् षट्सप्तांगुलविस्तृता । कूर्मपृष्ठोन्नता मध्ये पार्श्वयोश्चांगुलोच्छ्रिता॥२५
" गजोष्ठसदृशी तद्वदायता च्छिद्रसंयुता । मेखलोपरि सर्वत्र अश्वत्थदलसन्निभा ॥ "
एवं कुंडं च मंडपेशानभागे उदीच्यां वेति हेमाद्रिः । अयुतादिहोमं प्रकृत्य वसिष्ठस्तु ।

" कुंडं तन्मध्यभागे तु कारयेच्चतुरस्रकम् । कुंडस्येशानभागे तु पूजावेदिं प्रकल्पयेत् ॥ "
इत्याह । अत्र चतुरस्रमित्यनेन क्षत्रियादिपुरस्कारेण विहितानामाकारविशेषाणां स्त्रीपुरस्कारेण विहितस्य योन्याकारस्य निवृत्तिः । योनौ पुनः शुभं दलैर्हाम इत्यादाः काम्यास्त्वाकारा ३० भवंत्येव । वेद्यां विशेषमाह गोभिलः

" कुंडस्य प्रागुदीच्यां वा प्राच्यामुत्तरतोऽपि वा । चतुरस्रं चतुर्द्वारं कर्तव्यं ग्रहपीठकं ॥

" श्रीकाम पूर्वेण कुर्यात्पुष्ट्यर्थे दक्षिणेन तु । पश्चाद्विजयसिद्ध्यर्थं शान्त्यर्थं चोत्तरेण तु ॥
" ऐशान्यां सर्वकामाय त्वाग्नेय्या त्वभिचारके । नैर्ऋत्यां पुत्रलाभाय पुष्ट्यर्थे वायवेन त्विति ॥"
ग्रहवेदी तु स्थंडिलपक्षेऽपि कार्या । वसिष्ठ " लिखेदष्टदलं पद्मं वेदिकोपरि तण्डुलैः । "
अत्रैकाग्निब्रह्माचार्यपक्षमुक्त्वा तेषां नवसंख्या कुण्डेषु तत्तन्ग्रहाकाराश्चाह प्रयोगपारिजाते
५ भगवान्

" मनोरमे शुचौ देशे होमशालामलङ्कृताम् । कृत्वा तु सवृता प्राज्ञो ग्रहस्थानं प्रकल्पयेत् ॥
"तन्मध्ये भास्करस्थानं भवेत्पूर्वोत्तरे बुधः । पूर्वस्मिन् भार्गवस्थानं सोमो दक्षिणपूर्वके ॥
" दक्षिणस्यां कुजस्थानं राहोर्दक्षिणपश्चिमे । शनेस्तु पश्चिमे स्थानं केतोरुत्तरपश्चिमे ॥
" उत्तरस्यां गुरोः स्थानमेवं च स्थंडिलं भवेत् " । स्थंडिलमान्यर्थं ।
१० " भास्करस्य च वृत्तं स्याच्चन्द्रस्य चतुरस्रकं । कुजस्य तु त्रिकोणं स्याद्बाणाकारं बुधस्य तु ॥
" गुरोर्दीर्घचतुष्कोणं पञ्चकोणं सितस्य तु । चापाकारं शनेः राहोः शूर्पं केतोर्ध्वजाकृति ॥
" नवधा विभजेदग्निं श्रौतकर्मविधानतः । ऋत्विजश्च यथाभागं कुण्डेषु ब्राह्मणाः पृथक् ॥
" अथ स्रुवेण जुहुयात्सूर्यपात्रकदाञ्चकान् । ऋत्विजो जुहुयुः सर्वे स्रुवेणैव पृथक् पृथक् ॥
" अग्नौ तु शकलान् गृह्यसमारोपणमग्निषु । प्रधानाग्नौ निधायेमानित्थं होमं समाचरेदिति "॥
१५ " अत्रैव च स्थंडिलं भवेदि " त्यनेन स्थंडिलानां कुण्डानां च समं आकारस्तत्तद्दिक्षु निवेशश्चोक्तः । ब्राह्मणाः पृथगित्यनेन न वाचार्यो ब्राह्मणाश्च न वदुक्त । अत्रार्थसंक्षेपः प्रयोगपारिजाते " मध्यकुण्डे स्मार्ताग्निं प्रणीय ततो नवाचार्या अष्टसु कुण्डेष्वग्निं प्रणीयाज्यभागान्तेऽर्कादिसमिद्भिर्गुडौदनादिहविर्भिराज्येन च ग्रहादिमन्त्रैर्हुत्वा ‹पश्चात्समस्तव्याहृतिभिश्च तिलान् हुत्वा स्विष्टकृदादिहोमशेषं कृत्वा पूर्णाहुतिर्जुहुयुरिति । "
२० कुण्डमुक्त्वा स्कान्दे

" तस्य चोत्तरपूर्वेण स्थंडिलं रत्नमात्रकं । निम्नं चतुरस्रं च वितस्त्युच्छ्रायसम्मितम् "॥
स्थंडिलं वेदिः । वप्रो मेखला । मात्स्ये ( अ ९३ श्लो ९६।९७ )
" द्व्यङ्गुलोच्छ्रितो वप्रः प्रथमः समुदाहृतः । ‹यङ्गुलोच्छ्रायसंयुक्तं वप्रद्वयमथोपरि ॥
" द्व्यङ्गुलस्तत्र विस्तारः सर्वेषां कथितो बुधैः ॥ " तत्र ग्रहानाह याज्ञवल्क्यः (आचारे २९६)
२५ " सूर्यः सोमो महीपुत्रः सोमपुत्रो बृहस्पतिः । शुक्रः शनैश्चरो राहुः केतुश्चेति ग्रहाः स्मृताः ॥"

स्कान्दे

"नवग्रहमखे कुर्यादृत्विजश्चतुरः शुभान् । अथवा चैकमभ्यर्च्य विधिना ब्रह्मणा सह ॥ "
त्रिविधमपि नवग्रहमुपक्रम्य वसिष्ठस्तु

"षोडश ब्राह्मणान् शुद्धान् दमानुतविवर्जितान् । तेषां मध्ये श्रेष्ठतममाचार्यं तं प्रकल्पयेदिति ॥"
३० अत्र पारिजाते नवाचार्या एको ब्रह्मा षडृत्विजः । " आचार्येभ्यो नवभ्यश्च ग्रहार्चनफलं ततः " इत्युक्ते । आचार्यः कर्म एव कुर्यात् । परे त्वारम्मम् । धेन्वाद्या ग्रहदक्षिणा अपि तेभ्य एव देया इत्याद्युक्तं तदयुक्तं । उपक्रमे एकाचार्यं श्रुतेराचार्यानाचार्यसमुदाये

---

१ ङफघस–सर्वा । २ क्षसघ–कल्पान् । ३ क–एकस्य ।

प्राणभृत उपदधातीतिवल्लिंगसमवायमात्रेण नवभ्य इत्युपसंहारस्थपदोपपत्तेः। उपक्रमेऽपि यद्यप्याचार्यस्य संस्कार्यत्वेनैकत्वमविवक्षितं तथाऽप्याचार्यस्य भूतभाव्युपयोगाभावात्संस्कार्य्यत्वानुपपत्तेर्वृत आचार्यः स्वकर्म कुर्यादिति कल्पिते वाक्ये उपादेयत्वादाचार्यस्य भवत्येकत्वं विवक्षितम्[1]। उपपादितं चेदमध्वर्युं वृणीते होतारं वृणीते पुरोहितं वृणीत इत्यत्र मिश्रैः

" जन्मभूर्गोत्रमग्निश्च वर्णस्थानमुखानि च। योऽज्ञात्वा कुरुते शांतिं ग्रहास्तेनावमानिताः॥" ५

तत्र वर्णजन्मनी आह दामोदरीये वृद्धपराशरः

" रक्तः कश्यपजो भानुः शुक्लो ब्रह्मसुतः शशी। रक्तो रुद्रसुतो भौमः पीतः सोमसुतो बुधः॥

" पीतो ब्रह्मसुराचार्यः शुक्रः शुक्लो भृगूद्वहः। कृष्णः शनी रवेः पुत्रः कृष्णो राहुः प्रजापतेः॥

" कृष्णः केतुः कृशानूत्थः कृष्णाः पापास्त्रयोऽप्यमी"॥ स्कांदे

"उत्पन्नोऽर्कः कलिंगेषु यमुनायां च चंद्रमाः। अंगारकस्त्ववंत्यायां मगधायां हिमांशुजः॥ १०

" सैंधवेषु गुरुर्जातः शुक्रो भोजकटे तथा। शनैश्चरस्तु सौराष्ट्रे राहुर्वै राठिनापुरे॥

" अंतर्वेद्यांततया केतुरित्येता ग्रहभूमयः।

" यस्य यस्य च यद्गोत्रं तत्ते वक्ष्याम्यतः परं। आदित्यः काश्यपे गोत्रे आत्रेयश्चंद्रमा भवेत्॥

" भरद्वाजोद्भवो भौमस्तथाऽऽत्रेयश्च सोमजः। शक्रपूज्योंऽगिरोगोत्रः शुक्रो वै भार्गवस्तथा॥

" शनिः काश्यप एवाद्य राहुः पैठीनसिस्तथा। केतवो जैमिनेयाश्च ग्रहाग्निस्त्वनंतरम्॥"१५

" आदित्यः कपिलो नाम पिंगलः सोम उच्यते। धूमकेतुस्तथा भौमो जाठराग्निर्बुधः स्मृतः॥

" गुरोश्चैव शिखी नाम शुक्रो भवति हाटकः। शनैश्चरो महातेजा राहुकेत्वोर्हुताशनः॥"

एतानि ग्रहविशेषतोऽग्निनामानि। कर्मविशेषतोऽपि देवीपुराणे

" शुभो ग्रहविधौ ह्यग्निर्लक्षहोमे पराजितः। कोटिहोमे शिवो वन्हिः सर्वकामप्रदायकः॥"

कचित्तु " लक्षहोमे तु वन्हिः स्यात्कोटिहोमे हुताशन" इति। स्कांदे २०

"भास्करांगारकौ रक्तौ श्वेतौ शुक्रनिशाकरौ। सोमपुत्रो गुरुश्चैव तावुभौ पीतकौ स्मृतौ॥

" कृष्णे शनैश्चरं विंद्याद्राहुं चित्राश्च केतवः। मध्ये तु भास्करं विंद्याच्छशिनं पूर्वदक्षिणे॥

" दक्षिणे लोहितं विंद्याद् बुधं पूर्वोत्तरेण तु। उत्तरेण गुरुं विंद्यात्पूर्वेणैव तु भार्गवं॥

" पश्चिमेन शनिं विंद्याद्राहुं पश्चिमदक्षिणे। पश्चिमोत्तरतः केतुः स्थाप्यो वै शुक्लतंदुलैः॥

" अथवा वर्णकैः कार्याः कार्याः स्वर्णादिधातुभिः॥" याज्ञवल्क्यः (आचारे २९७) २५

" ताम्रकात्स्फटिकाद्रक्तचंदनात्स्वर्णजादुभौ। रजतादयसः सीसात्कांस्यात्कार्या ग्रहास्तथा॥"

वसिष्ठः " यथारुचिप्रमाणेन प्रतिमाः कल्पयेत्सुधीः।" अत्र सर्वत्र ग्रहाणां सूर्यादिः क्रमः स्पष्टः। बौधायनस्तु "सूर्यांगारकशुक्रचंद्रबुधगुरुशनय" इत्याह। स्कांदे

" भानुं तु मंडलाकारं सोमं तु चतुरस्रकं। अंगारकं त्रिकोणं च बुधं बाणाकृतिं तथा। ३०

---

1 क्षुद्रकत्य-प्राणभृत्।

" दीर्घचतुरस्रं गुरुं पञ्चास्रं भार्गवं तथा । धनुस्तुल्यं शनिं विद्याद्राहुं शूर्पाकृतिं तथा ॥
" ध्वजाकाराः केतवश्च मण्डलास्तत्र रुक्मिण " ॥ रुक्मिणः इत्यनाधारावयवसंयुक्तं । स्थापये-च्छुक्लतण्डुलैर्वर्णकैर्वेत्यपि इत्यत्र पक्षयोर्मण्डलाकारतेति हेमाद्रिः । तत्रैव
" शुक्रार्कौ प्राङ्मुखौ ज्ञेयौ गुरुसौम्यावुदङ्मुखौ । प्रत्यङ्मुखः शनिः सोमः शेषा दक्षिणतो मुखाः ॥"
५ इदं च शुक्रादीनां प्राङ्मुखत्वादि " आदित्याभिमुखाः सर्वे " इति ( अ ९३ श्लो० ९८ ) मात्स्योक्तादित्याभिमुखत्वेन विकल्पते । यत्तु हेमाद्रिर्विकल्पपरिजिहीर्षया प्राङ्मुखाः पूर्वदृष्टी उदङ्मुखौ वामदृष्टी प्रत्यङ्मुखोऽधोदृष्टिर्दक्षिणतो मुखा दक्षिणदृशश्च इति व्याचष्टे तन्मूलं चिन्त्यं विरोधतादवस्थ्यं च ।
" वर्णरूपगुणैर्युक्तान् ध्यात्वाऽऽवाहयेत्तु तान् " । मात्स्ये ( अ ९३ श्लो ४ )
१० " पुण्येऽह्नि विप्रकथिते कृत्वा ब्राह्मणवाचनं । अग्निप्रणयनं कृत्वा तेषामावाहयेत्सुरान् ॥
" देवतानां तत्र संख्या विंशतिर्द्वादशाधिका । आदित्याभिमुखाः सर्वे साधिप्रत्यधिदेवताः ॥ "
विष्णुधर्मोत्तरे
" अतः परं प्रवक्ष्यामि या दृष्टो यो ग्रहः स्मृतः । अग्निरर्कः स्मृतः सोमो वरुणः परिकीर्तितः
" अङ्गारकः कुमारश्च बुधश्च भगवान् हरिः । बृहस्पतिः स्मृतः शक्रः शुक्रो दृष्टो च पार्वती ॥
१५ " प्रजापतिः शनिश्चैव राहुर्ज्ञेयो गणाधिपः । विश्वकर्मा स्मृतः केतुर्ग्रहास्ते सुराः स्मृताः ॥ "
अत एवाग्न्यादिलिङ्गका मन्त्राः सूर्यादिस्थापने उक्ताः । स्कान्दे
" अग्निं दूतं दिनेशाय चन्द्रायाप्यायस्वेत्यपि । स्योना पृथिवि भौमाय इदंविष्णुर्बुधाय च ॥
" इन्द्र आसां गुरवेऽथ शुक्रज्योतिः सिताय च । प्रजापतेनेति सौरायं आयं गौरिति राहवे ॥
" केतवे ब्रह्मज्ञानं सैर्मन्त्रैः प्रतिष्ठिताः ॥ " एतया च मन्त्राणां
२० ' ध्यात्वाऽऽवाहयेत्तु तान्" इत्युक्तामिर्व्याहृतिभिरावाहने विकल्पः । मदनरत्ने त्वावाहनस्थापनयोर्मध्ये व्याहृतिभिरावाहनं एतैर्मन्त्रैः स्थापनमित्युक्तं । पारिजाते वामनस्तु
" प्रणवं त्वादितः कृत्वा भूर्भुवःस्वस्ततः परम् । चतुर्थ्यन्तनामसंयुक्तं नमस्कारान्तयोजितम् ॥
" एष मन्त्रः समाख्यातो ग्रहपूजाविधायकः । अनेनावाहनं कुर्याद्नेनैव विसर्जनम् ॥ "
इत्युक्ते । अत्रावाहनवाक्येषु विशेषमाह बौधायनः " किरीटिनं पद्मासनं पद्मकरं
२५ पद्मगर्भसमद्युतिं सप्ताश्वं सप्तरज्जुं कलिङ्गदेशजं काश्यपगोत्रं त्रिष्टुप्छन्दसं रक्ताम्बरधरं रक्ताभरणभूषितं रक्तगन्धानुलेपनं रक्तछत्रध्वजपताकिनं मुकुटकेयूरभावितशोभितं मारुह्य रथं द्विभुजं मेरुं प्रदक्षिणीकुर्वाणं मण्डले प्रविष्टमधिदेवताग्निसहितं प्रत्यधिदेवताश्वरसहितं रक्तवृत्तमण्डलं पूर्वमुखमादित्यमावाहयामि ॥ "

---

१ क्षत्र-किरणपात । २ विकाशते । ३ अ ९३ श्लो ९ । ३ ऋ सं १।११२२ । ४ ऋ सं १।२।१६ । ६ ऋ सं १।२।१७ । ७ ऋ सं ८।४।२३ । ८ ऋ सं ८।८।४७ ।

" किरीटिन रक्तमाल्याबर रक्तशूलगदाधर चतुर्भुज मेषगमनमवतिदेशज वासिष्ठगोत्रज जमदग्न्यार्ष जगतीछंदस रक्तांबरधर रक्ताभरणभूषित रक्तमाल्यानुलेपन रक्तछत्रध्वजपताकिन मुकुटकेयूरमणिशोभितमारुह्य रथ दिव्य मेरु प्रदक्षिणीकुर्वाण ग्रहमडले प्रविष्टमधिदेवताभूमिसहित प्रत्यधिदेवतास्कंदसहित त्रिकोणरक्तमडले दक्षिणामुखमगारकमावाहयामि ।

" किरीटिन श्वेतवर्ण चतुर्भुज दडिन वरद काव्य साक्षसूत्रकमडलु कीकटदेशज भार्गवगोत्रज शौनकार्ष पक्तिछदस श्वेतांबरधर श्वेताभरणभूषित श्वन श्वेतगधानुलेपन श्वेतछत्रध्वजपताकिन मुकुटकेयूरमणिशोभितमारुह्य रथ दिव्य मेरु प्रदक्षिणीकुर्वाण ग्रहमडले प्रविष्टमधिदेवतेंद्राणीसहित प्रत्यधिदेवेंद्रसहित शुक्लपचकोणमडके प्राड्मुख भगवत शुक्रमावाहयामि । ५

" किरीटिन श्वेतांबरधर दशाश्व श्वेतभूषण पाशपाणि द्विबाहु वनायुदेशजमत्रिगोत्रमात्रेयार्षमनुष्टुप्छदस श्वेतांबरधर श्वेतगधानुलेपन श्वेतछत्रध्वजपताकिन मुकुटकेयूरमणिशोभितमारुह्य रथ दिव्य मेरु प्रदक्षिणी कुर्वाण ग्रहमडले प्रविष्टमधिदेवतासहित प्रत्यधिदेवतोमासहितं चतुरस्रमडले प्रत्यड्मुख सोममावाहयामि । १०

"किरीटिन पीतमाल्यांबरधर पीतवर्ण कर्णिकारसमद्युति खड्गचर्मगदापाणिं सिंहस्थ वरद मगधदेशजमत्रिगोत्रज भारद्वाजार्ष बृहतीछदस पीतांबरधर पीताभरणभूषित पीतगधानुलेपनम् पीतछत्रध्वजपताकिन मुकुटकेयूरमणिशोभितमारुह्य रथ दिव्य मेरु प्रदक्षिणीकुर्वाण ग्रहमडले प्रविष्टमधिदेवताविष्णुसहित प्रत्यधिदेवताविष्णुसहित पीतवर्णमडले दक्षिणाभिमुख बुधमावाहयामि । १५

"किरीटिन पीतवर्ण चतुर्भुज दडिवरद साक्षसूत्रकमडलु सिंधुदेशजमागिरसगोत्र वासिष्ठार्ष मनुष्टुप्छदस पीतांबरधर पीताभरणभूषित पीतगधानुलेपन पीतछत्रध्वजपताकिन मकुटकेयूरमणिभूषितमारुह्य रथ दिव्य मेरु प्रदक्षिणीकुर्वाण ग्रहमडले प्रविष्ट अधिदेवतेंद्रसहित प्रत्यधिदेवताब्रह्मसहित पीतदीर्घचतुरस्रमडल उदड्मुख गुरुमावाहयामि । २०

"किरीटिनमिद्रनीलसमद्युतिं शूलधर वरद गृध्रवाहन सबाणासनधर सौराष्ट्रदेशज काश्यपगोत्रज भृग्वार्ष गायत्रीछदस कृष्णांबरधर कृष्णाभरणभूषित कृष्णगधानुलेपन कृष्णछत्रध्वजपताकिन मुकुटकेयूरमणिशोभितमारुह्य रथ दिव्य मेरु प्रदक्षिणीकुर्वाण ग्रहमडले प्रविष्टमधिदेवताप्रजापतिसहित प्रत्यधिदेवतायमसहित कृष्णधनुर्मडल प्रत्यड्मुख शनैश्चरमावाहयामि ।

"किरीटिन करालवदन खड्गचर्मशूलधर सिंहासनस्थ पूर्वदेशज पाठलिगोत्रमागिरसार्षमनुष्टुप्छदस कृष्णांबरधर कृष्णाभरणभूषित कृष्णगधानुलेपन कृष्णछत्रध्वजपताकिन मुकुटकेयूरमणिशोभितमारुह्य रथ दिव्य मेरु प्रदक्षिणीकुर्वाण ग्रहमडले प्रविष्टमधिदेवतासर्पसहित प्रत्यधिदेवताकालसहित कृष्णशूर्पमडले दक्षिणामुख राहुमावाहयामि । २५

"धूम्रान् द्विबाहून् पाशधरान् विकृताननान् गृध्रवाहनान् किरीटिनो मत्स्यदेशजान् जैमिनिगोत्रजान् गौतमार्षान् नानाछदसश्चित्रांबरधराश्चित्राभरणभूषिताश्चित्रगधानुलेपनान्कृष्णपिंगलध्वजपताकिनो मुकुटकेयूरमणिशोभितानारुह्य रथ दिव्य मेरु प्रदक्षिणीकुर्वाणान् ग्रहमडले प्रविष्टा- ३०

१ ह्ल-उद मुख । २ ह्ल-सबाणशरधर ।

नधिदेवतान्ब्रह्मसहितान् प्रत्यधिदेवताचित्रगुप्तसहितान् कृष्णपिंगलध्वजमंडले दक्षिणामुखान् ।
केतूनावाहयामि " । स्कांदे

" ईश्वरं भास्करे विंद्यादुमां विद्यान्निशाकरे । स्कंदमंगारके विंद्याद्बुधे नारायणं विदुः ।
" गुरौ वेदनिधिं विंद्यात् शुक्रे शक्रो विधीयते । शनैश्चरे यमं विंद्याद्राहौ कालस्तथैव च ।
" चित्रगुप्तोऽधिपः केतोरित्येता ग्रहदेवताः । " वेदनिधिर्ब्रह्मा । तत्रैव
" वक्ष्ये स्थानानि देवानामीश्वरादि यथाक्रमं ।
५ " सूर्यस्य चोत्तरे शंभुमुमां सोमस्य दक्षिणे । स्कंदमंगारकस्यैव दक्षिणस्यां निवेशयेत् ॥
" सौम्यात्पश्चिमतो विष्णुं ब्रह्मा जीवस्य पूर्वतः । इंद्रमैन्द्र्यां सिताद्विद्धि मंदाद्याम्यतो यमं ॥
" राहोः पूर्वोत्तरे कालं सर्वभूतभयावहं । केतोर्नैर्ऋतदिग्भागे चित्रगुप्तं निधापयेत् ॥ " स्कांदे
" अतः स्थापनमंत्रांश्च कथयाम्यनुपूर्वशः । ईश्वरं त्र्यंबकं चेति श्रीश्चते चेति पार्वतीं ॥
" यदक्रंदेति च स्कंदं विष्णुं विष्णोरराटेति । आवहास्रेति ब्रह्माणं संजोषेंद्रेति वासवं ।
१० " यमाय त्वेति च यमं कालं कार्षिरसीति च । चित्रावस्विति मंत्रेण चित्रगुप्तं निधापयेत् ॥
" अग्निरापः क्षितिर्विष्णुरिंद्र ऐंद्री प्रजापतिः । सर्पो ब्रह्मा च निर्दिष्टा अधिदेवा यथाक्रमं ॥
" अग्निं दूतमिति त्वग्नेर्वरुणस्य उदुत्तमं । स्योना नः पृथिवि मेदिन्या इदं विष्णुस्तु विष्णवे ।
" इंद्रायेंद्रो इतींद्रस्योत्तानपर्णे शचीरियतो । प्रजापते प्रजेशस्य एष ब्रह्मेति वै विधेः ॥
" मंत्रो नमोऽस्तु सर्पेभ्यः सर्पाणां स्थापने मतः ।
१५ " ग्रहदेवाधिदेवानां नैवेद्यं कुसुमानि च । ग्रहवच्चासनं दानं स्थापनं चानुपूर्वशः ॥ "

सूर्यादयो ग्रहा ईश्वरादयो देवाः अग्न्यादयोऽधिदेवाः । तत्रेश्वरादिदेवानां सूर्यस्यैवोत्तरे शंभुमित्यादिना पूर्वं स्थलान्युक्तानि । अग्न्यादयोऽधिदेवास्तु ग्रहदेवयोर्मध्ये स्थाप्याः । तथा च मदनरत्ने गोभिलवसिष्ठौ

" ग्रहदेवतयोर्मध्ये अधिदेवान्निधापयेत् " । तत्रैव संग्रहे तु ईश्वरादयो देवा आधिदेवता
२० त्वेन व्यवहृताः । अग्न्यादयस्तु प्रत्यधिदेवतात्वेन । तेषां स्थानांतरं चोक्तं
" अधिदेवा दक्षिणतो वामे प्रत्यधिदेवताः । स्थापनीयाः प्रयत्नेन व्याहृतीभिः पृथक् पृथक् ॥ "
तत्रैव वासिष्ठीये तु देवतानां स्थानांतरं कश्चिन्मन्त्रांतरं चोक्तं
" रुद्रं त्र्यंबकमंत्रेण रवेरुत्तरतो न्यसेत् । सोमस्याग्नेयदिग्भागे श्रीश्च ते मेनकात्मजा ॥
" यदक्रंदेति भौमस्य स्कंदं याम्ये प्रदापयेत् । विष्णुं विष्णोरराटेति यजेत्पूर्वे बुधस्य च ॥
२५ " गुरोरुत्तरतोऽभ्यर्च्यो ब्रह्मा ब्रह्मेति मंत्रतः । सजोषेंद्रेति शुक्रस्य प्राच्यां शक्रं निधापयेत् ।
" शनेः पश्चिमतः स्थाप्यो यमाय त्वेत्यृचा यमः । कार्षिरसीति मंत्रेण राहोः कालं तथोत्तरे ॥
" चित्रगुप्तं तु केतूनां चित्राय त्वेति नैर्ऋते । ग्रहाश्च देवताः स्थाताः शृणुष्वातोऽधिदेवताः ॥

---

१ ऋ. सं. ५।४।३० । २ ऋ. सं. २।३।११ । ३ ऋ. सं. ३।३।११ १–सजोष इति । ४ ऋ. सं. १।१।२२ । ५ ऋ. सं. १।२।१५ । ६ ऋ. सं. १।२।६ । ७ ऋ.सं. १।२।७ । ८ ऋ.सं. ७।१।४७ । ९ ऋ. सं. ८।८।३ । १० ऋ. स. ८।७.४ ।

" अग्निरापो धराविष्णुरिंद्रेंद्राणी प्रजापतिः । सर्पो ब्रह्मा च निर्दिष्टा अधिदेवा यथाक्रमं ॥
" ग्रहदेवतयोर्मध्ये अधिदेवान्निवेशयेत् " । एतानि च वासिष्ठीयवचांसि केश्चिन्नाद्रियंते ।
पारिजाते
" पद्मरागदलमारभ्य दलाग्रेषु क्रमान्न्यसेत् । इंद्रादिलोकपालांश्च तत्तन्मंत्रैः प्रपूजयेत् ॥
" विनायकं तथा दुर्गां वायुमाकाशमेव च । आवाहयेद्व्याहृतिभिस्तथैवाश्विकुमारकौ ॥ " ५
एतेऽत्र विनायकाद्याः पंचग्रहेभ्य उत्तरतः स्थाप्या इति सांप्रदायिकाः । दक्षिणपश्चिमवायव्योत्तरपूर्वेषु यथाक्रममित्यन्ये ।
" राहुमंदशिनेशानामुत्तरस्यां यथाक्रमं । गणेशो दुर्गावायुश्च राहुकेत्वोश्च दक्षिणे ॥
"आकाशमश्विनौ चेति पंचैतान् स्थापयेद्बुध" । इति संग्रहवचनानुसारेणेति पितामहचरणा रूपनारायणश्च । स्कांदे १०
"उत्तरे शनिसूर्याभ्यां गुरुकेत्वोश्च दक्षिणे । गणाधिपं प्रतिष्ठाप्य सर्वदेवनमस्कृतं " ॥
रविशनिकेतुगुरूणां मध्य इति फलितोऽर्थः । विनायकपदमुपलक्षणम् । तेन दुर्गादयोऽप्यत्रैव स्थाप्या इति केचित् । चंदनादिनियमस्तत्रैव

" दिवाकरकुजाभ्यां हि दापयेद्रक्तचंदनं । चंद्रे च भार्गवे चैव सितवर्णं प्रदापयेत् ॥
" कुंकुमेन तु संयुक्तं चंदनं जीवसौम्ययोः । अगुरुं चंदनं दद्याद्राहुकेत्वर्कजेषु च ॥ १५
" ग्रहवर्णानि पुष्पाणि गायत्र्या धूपमादहेत् । रवेः कुंदुरुकं धूपं शशिनस्तु घृताक्षताः ॥
" भौमे सर्जरसं चैव अगुरुं च बुधे स्मृतम् । सिल्हकं गुरवे दद्याच्छुक्रे बिल्वागुरुं तथा ॥

" गुग्गुलं मंदवारे तु लाक्षा राहोश्च केतवे " ॥ कुंदुरुकः सल्लकीनिर्यासः । सिल्हकं सिल्हा इति मध्यदेशे प्रसिद्धम् । बिल्वागुरुं बिल्वफलनिर्याससहितमगुरुं । मंदवारः शनिः ॥
" उद्दीप्यस्वेति मंत्रेण दीपं दद्यादतंद्रितः । " २०

विहितगंधधूपादीनामसंभवे तु याज्ञवल्क्यः ( आचारे २९८—२९९ )
" यथावर्णं प्रदेयानि वासांसि कुसुमानि च । गंधश्च वलयश्चैव धूपो देयश्च गुग्गुलुः ॥ "
स्कांदे
" गुडोदनं रवेर्दद्यात्सोमाय घृतपायसं । लोहिताय हविष्यान्नं बुधाय क्षीरषाष्टिकम् ॥
" दध्योदनं गुरोर्दद्याच्छुक्राय च घृतोदनं । मिश्रितं तिलमाषैश्च नैवेद्यं तु शनैश्चरे ॥ २५
" राहोर्मांसोदनं दद्यात्केतोश्चित्रौदनं तथा " ॥ चित्रौदनं
"तिलतंडुलमिश्रं स्यादजाक्षीरं च शोणितं कर्णनासा गृहीतं स्यादेतच्चित्रौदनं स्मृतमिति॥" दामोदरः
एतैरेव द्रव्यैर्ब्राह्मणा अपि भोज्याः । तथा च याज्ञवल्क्यः ( आचारे ३०४–३०५ )
" गुडोदनं पायसं च हविष्यं क्षीरषाष्टिकं । दध्योदनं हविश्चूर्णं मांसं चित्रान्नमेव च ॥
" दद्याद् ग्रहक्रमादेतद्द्विजेभ्यो भोजनं बुधः । शक्तितो वा यथालाभं सत्कृत्य विधिपूर्वकम् ॥ " ३०

---

१ क्षघरड-निधापयेत् । २ डक्षक-पश्चिमे । ३ ड-धूपदीपगंधादीनां । ४ ड्य-ग्रहस्यैः ।

वसिष्ठः

" उपचाराणि सर्वेषामपि शुक्लाक्षतैः सदा । गंधाभावे शुक्लगंधं पुष्पाभावे सुगंधकं ॥

" धूपाभावे गुग्गुलुः स्याद्व्याभावे तु मिश्रकं । पंचामृतं गवामेव मिश्रकं न कदाचनेति ॥ "

मात्स्ये ( अ. ९३ श्लो. २१।२२।२३।२४ )

५ " प्रागुत्तरेण तस्माच्च दध्यक्षतविभूषितम् । चूतपल्लवसंयुक्तं फलवस्त्रयुगान्वितम् ॥

" पंचरत्नसमायुक्तं पंचभंगयुतं तथा । स्थापयेदव्रणं कुंभं वरुणं तत्र विन्यसेत् ॥

" गंगाद्याः सरितः सर्वाः समुद्राश्च सरांसि च । गजाश्वरथ्यावल्मीकसंगमाद्ध्रदगोकुलात् ॥

" मृदमानीय विप्रेंद्र सर्वौषधिसमन्विताम् । स्नानार्थं विन्यसेत्तत्र यजमानस्य धर्मवित् ॥ "

याज्ञवल्क्यः ( आचारे ३०२ )

१० " अर्कः पलाशः खदिर अपामार्गोऽथ पिप्पलः । उदुंबरः[1] शमी दूर्वाकुशाश्च समिधः क्रमात् ॥ "

ईश्वरादिदेवानां स्वस्य ग्रहसमिद्भिरेव होमः । हेमाद्रौ देवीपुराणे

" गणाधिपतये देया प्रथमा तु वराहुतिः । अन्यथा विफलं विप्र भवतीह न संशयः ॥ " इति ।

आश्वलायनः " जुहुयात्समिद्व्याज्येनाभिर्ग्रहैर्यथाक्रममिति " ॥

समित्सु विशेषमाह याज्ञवल्क्यः ( आचारे ०३३ ) " होतव्या मधुसर्पिर्भ्यां दध्ना क्षीरेण

१५ वा युता " इति । न चात्र संप्रतिपन्नदेवताकानेकद्रव्याणामेकैवाहुतिः सान्नाय्यवत्तद्दिति वाच्यं ।

" आदौ तु समिद्व्याज्यैः पृथगष्टोत्तरं शतमिति " वासिष्ठात् । अन्यत्रापि संप्रतिपन्न-

देवताके स्मार्ते कर्मण्यनेकद्रव्यके पृथगेव होम इति सांप्रदायिकाः । बहुषु कर्मसु प्रायो

वचनान्यप्येवं । स्कांदे

" आकृष्णेन[2] सहस्रांशोरिमं देवा[3] तथेंदवे । अग्निर्मूर्द्धेति[4] भौमाय उद्बुध्यस्व[5] बुधाय च ॥

२० " बृहस्पतेति[6] च गुरोः शुक्रायान्नात्परि[7] श्रुतः । शनैश्चरस्य मंत्रोऽयं शन्नोदेवीरुदाहृतः[8] ॥

" कया न[9] इति राहोश्च केतुं कृण्वंस्तु[10] केतवे " । मात्स्ये ( अ. ९३ श्लो० ३८, ४६ )

" आ वो[11] राजेति रुद्रस्य बलिं होमं समाचरेत् । आपो हिष्ठेत्युमायास्तु[12] स्योनेति[13] स्वामिनस्तथा ॥

" विष्णोरिदं[14] विष्णुरिति त्वमिंसेति[15] स्वयंभुवः । इद्रमिद्देवतातेय[16] इतींद्रस्य प्रकीर्तितः ॥

" तथा यमस्य चायंगौरिति[17] होमः प्रकीर्तितः । कालस्य ब्रह्मजज्ञानमिति[18] मंत्रः प्रशस्यते ॥

२५ " चित्रगुप्तस्य चाज्ञातमिति[19] पौराणिका विदुः । अग्निं दूतं वृणीमह[20] इति वन्हेरुदाहृतः ॥

" उदुत्तमं[21] वरुणमित्यपां मंत्रः प्रकीर्तितः । भूमेः पृथिव्यंतरिक्षमिति वेदेषु पठ्यते ॥

" सहस्रशीर्षा पुरुष इति विष्णोरुदाहृतः । इंद्रायेंद्रो[22] मरुत्वत इति शक्रस्य शस्यते ॥

" उत्तानपर्णे[23] सुभगे इति शच्याः समाचरेत् । प्रजापतेः पुनर्होमं प्रजापते[24] इति स्मृतः ॥

---

१ याज्ञवल्कीये " औदुम्बर " इति पाठः । २ ऋ. सं. १।३।६. ३ ऋ. सं. ६।३।१९. ४ ऋ. सं. ८।५।१८. ५ ऋ. सं. २।५।२१. ६ ऋ. सं. यद्द—याशान्परस्तुते । ७ ऋ. सं. ७।६।५. ८ ऋ. सं. ३।६।२४. ९ ऋ. सं. १।१।११. १० ऋ. सं. ३।४।२०. ११ ऋ. सं. ७।६।५. १२ ऋ. सं. १।२।६. १३ ऋ. सं. १।२।७. १४ ऋ. सं. ५।८।२५. १५ ऋ. सं. ५।७।२५. १६ ऋ. सं. ८।८।४७ । १७ ऋ. सं. १।१।१२ १८—ह्य·विष्णो । १९ ऋ. सं. १।२।१५. २० ऋ. सं. ८।४।१७. २१ ऋ. सं. ७।१।४०. २२ ऋ. ८।८।३. २३ ह्य—र्णि । २४ ऋ. सं. ८।७।८.

" नमोऽस्तु सर्पेभ्य इति सर्पाणां मन्त्र उच्यते । एवं ब्रह्माय ऋत्विज इति ब्रह्मण्युदाहृतः ॥
" विनायकस्य चार्तून इति मंत्रो बुधैः स्मृतः । जातवेदसे सुनवाम दुर्गामन्त्रोऽत्र उच्यते ॥
" पूर्णाहुतिं च मूर्द्धान दिव इत्यभिपातयेत् " ॥ स्कान्दे
" नैवेद्यशेषं हुत्वा च होममन्त्रादनन्तरं । अथ व्याहृतिभिर्हुत्वा एकैकस्य यथाक्रमम् ॥
" अष्टोत्तरं च साहस्रं शतमष्टादिकं तथा । अष्टाविंशतिरष्टौ वा एकैकस्य तु होमयेत् ॥ ५
" होतव्यं च घृतं तत्र चरुर्लक्षादिकं पुनः । मन्त्रैर्दशाहुतीर्हुत्वा होमो व्याहृतिभिः स्मृतः ॥ "
अथेति अथवेत्यर्थः । गृहीत्वा तामथाविकोमितिवत् । मदनरत्ने त्वथवेत्येव पपाठ । तत्तन्मन्त्राणां व्याहृतीनां च परस्परं विकल्पः । अथाष्टोत्तरसहस्रादिसंख्या तु पक्षद्वयेऽपि नैवेद्यशेषहोमस्तु शाखाविशेषपरः इत्यपि स एव । लक्षादिकं पुनर्व्याहृतिभिर्होमो मन्त्रैर्दशाहुतीर्हुत्वा स्मृत इत्यन्वयः । मन्त्रैर्ग्रहमन्त्रैः । व्याहृतिभिर्व्यस्ताभिः समस्ताभिश्च । तातचरणास्तु अथ व्याहृतिभिर्हुत्वेति पृथग्वाक्यम् । ' एकैकस्येति ' तु प्रतिदैवतमष्टादिसंख्यान्वयार्थं । ' एकैकस्य तु होमयेदि त्येकैकपदं तु चर्वादिद्रव्यपरं न देवतापरं । अस्मिन्नेव होमे घृतचरुद्रव्यविधिश्च । लक्षादिकं इत्येतत्तु अथ व्याहृतिविहिते होमे लक्षादिसंख्याविध्यर्थं । मन्त्रैरित्यादि तु चरुहोमोत्तरं सोमं राजानमिति मन्त्रेण यथाप्रकृतिस्विष्टकृद्धुत्वा सूर्यादिमन्त्रैर्दशदशाहुतीः प्रतिदैवतं लक्षहोमादिद्रव्येण हुत्वा व्याहृतिभिर्लक्षादिहोमः कार्य इत्याहुः । यवाद्यन्यतमद्रव्येण ग्रहविधिः प्रत्येकं दशाहुतीस्तत्तन्मन्त्रैर्हुत्वा तेनैव द्रव्येण व्यस्तसमस्तव्याहृतिभिरयुतलक्षकोट्यन्यतमसंख्यया जुहुयादिति हेमाद्रिमदनौ । तानि च द्रव्याणि देवीपुराणे १५
" यवव्रीहिघृतक्षीरतिलकगुग्गुलसारिकाः । पङ्कजोशीरबिल्वार्कदला होमे प्रकीर्तिताः ॥
" उदङ्मुखा प्राङ्मुखा वा कुर्युर्ब्राह्मणपुङ्गवाः । मन्त्रवन्तश्च कर्तव्याश्चरवः प्रतिदैवतं ॥
" हुत्वा च तांश्चरून् सम्यक् ततो होमं समारभेत् " । चर्वादिकं च घृताक्तं होतव्यं । ' होतव्यं २० च घृताक्तं चरुभक्ष्यादिकं पुनरिति " मात्स्यात् ( अ ९३ श्लो ३२,३३ ) । भक्ष्यं द्राक्षादि । चरुर्नैवेद्यशिष्टो गुडौदनादि । तानि द्रव्याण्युक्त्वा "इत्येतानि हवींषि स्युः समित्संख्यासमाहुता"रित्याश्वलायनोक्तेः । अधिदेवतादिष्वपि होमो हेमाद्रौ
" चरुणा च समिद्भिश्च सर्पिषा च तिलैः क्रमात् । तत्तन्मन्त्रैश्च होतव्या श्यादयाधिदेवताः " ॥
गृह्यपरिशिष्टे । " प्रधानदशांशेन पार्श्वदेवतयोरिति " । अधिदेवतादिहोमे संख्या वासिष्ठे २५
" द्विशश्चैवाधिदेवता पचानां चैव पचधेति " । द्विशः पच । पचानां गणेशादीनां पचधा प्रत्येकमित्यर्थः । केचित्तु द्वौ त्रयो वा द्विशः । विनायकादीनां पचधा एकैकामिति केचित् ।
प्रयोगपारिजाते
" इन्द्रादिलोकपालांश्च तत्तन्मन्त्रैः प्रपूजयेत् । तत्तन्मन्त्रैर्जपं कुर्यात्ततो होमं समारभेत् " ॥
नृसिंहपुराणे
" ततो व्याहृतिभिः पश्चाज्जुहुयाच्च तिलादिकं । यावत्पूज्यत संख्या लक्षं वा कोटिरेव वा" ॥ ३०
वाशब्दादयुतमपि । ग्रहयज्ञश्च न नियतकालीनः । "स्वेच्छायज्ञ ॥ उच्यत" इति भविष्योत्तरात् ।

१ ज-पू । २ ऋ सं ७।४।२८ । ३ ऋ. स १।७।७ ४ ऋ स ४।७।१९ ५ मार्कण्डेयपुराणे । ६ ऋ. स १७।२९। ७ ह्र-कुनी ८ डक्ष-घृताभ्यक्तं ह्र-सद

" ततो व्याहृतिभिः कुर्यात्तिलहोमं प्रयत्नतः । प्रथमोऽयुतहोमः स्याल्लक्षहोमो द्वितीयकः ॥
" तृतीयः कोटिहोमः स्यात्त्रिविधो ग्रहयज्ञकः ॥
" एकरात्रं त्रिरात्रं वा पंचरात्रमथापि वा । शिवगाथां विष्णुगाथां शांतिं ब्राह्मणभोजनं ॥
" समापयेत्प्रतिदिनमेवं भक्तिसमन्वितः" ॥ इति । वासिष्ठेऽप्येकरात्रादिग्रहणं नियमानादरार्थं ।
५ अत्र सूक्तादिजपोऽपि तुलादानवदिति केचित् । वासिष्ठे
" अथाभिषेकमंत्रेण वाद्यमंगलगीतकैः । पूर्णकुंभेन तेनैव होमांते प्रागुदङ्मुखैः ॥
" अव्यंगावयवैर्ब्रह्मन् हेमस्रग्दामभूषितैः । यजमानस्य कर्तव्यं चतुर्भिः स्नपनं द्विजैः ॥"
अभिषेकमंत्राः प्रयोगे वक्ष्यंते । वसिष्ठः
" स्वस्तिकं कल्पयेत्पश्चात्कुंडस्येशानभागतः । यजमानाभिषेकार्थं तत्र भद्रासनं न्यसेत् ॥
१० " प्राङ्मुखस्योपविष्टस्य यजमानस्य तत्र च । अभिषेकं ततः कुर्युः साचार्याः षोडशर्त्विजः ॥
" विविधैर्मंगलैर्घोषैः सूतमागधजैः सह । ततस्तस्याभिषिक्तस्य रक्षार्थं बलिमुत्क्षिपेत् ॥
" दिग्विदिक्षु विचित्राख्यैर्दीपैर्नीराजयेत्ततः । शुक्लमाल्यांबरधरः शुक्लगंधानुलेपनः ॥
" ततो मंडपमागत्य ध्यायेदग्निं सुरान् ग्रहान् । प्रत्येकं प्रतिमंत्रैश्च दद्यात्पुष्पांजलिं तत ॥" इति ।
वामनः
१५ " आचार्यप्रमुखैर्यच्च ग्रहार्चनफलं ततः । समिदाज्यचरूणां च तिलहोमफलं च यत् ॥
" ब्रह्मत्वे कुंभपूजायां चार्चनस्य फलं च यत् । गणपक्षेत्रपाश्रीशदुर्गादिव्यंगदेवताः ॥
" तासां जपफलं सम्यक् गृण्हीयाज्जलपूर्वकं "। एतानि च वामनवचांसि निर्मूलानीति
**पितामहचरणाः** । वासिष्ठगोभिलवचसामपि केचिदाहुः । वसिष्ठः " ततो जपाद्दीन्
जुहुयात्पूर्णाहुतिमथाचरेत् "। तत्रैव " मंत्रेण सप्त ते अग्ने इति पूर्णाहुतिं चरेत् "। अग्निपुराणे
२० " मूर्द्धानं दिव मंत्रेण संस्रवेण च धारया । दद्यादुत्थाय पूर्णां वै नोपविश्य कदाचनेति" ।।
मात्स्ये ( ९३।५८–६२ )

" पूर्णाहुतिं च मूर्धानं दिव इत्यभिपातयेत् "। अत्र भिन्नशाखागतैकादशद्वादश-
कपालभेदेऽप्यैन्द्राग्न्यैर्यवदनेकमंत्रयुक्ताया अनेकसूत्रयुक्ताया अपि पूर्णाहुतेरेकत्वान्मंत्राणां
विकल्पः । उपांशुयाज इव शाखाभेदभिन्नानां याज्यानुवाक्यानां समुच्चयेन तु पठंति । वसोर्द्धारा
२५ त्वयुतहोमे नास्ति । प्रमाणाभावात् ।
" ततः शुक्लांबरधरः शुक्लगंधानुलेपनः । सर्वौषधैः सर्वगंधैः स्नापितो वेदपुंगवैः ॥
" यजमानः सपत्नीक ऋत्विजस्तान्समाहितः । दक्षिणाभिः प्रयत्नेन पूजयेद्गतविस्मयः ॥
" सूर्याय कपिलां धेनुं दद्याच्छंखं तथेंदवे । रक्तं धुरंधरं दद्याद्भौमाय ककुद्मिकं ॥
" बुधाय जातरूपं तु गुरवे पीतवाससी । श्वेताश्वं दैत्यगुरवे कृष्णां गामर्कसूनवे ॥
३० " आयसं राहवे दद्यात्केतवे छागमुत्तमं । सुवर्णेन समाः कार्या यजमानेन दक्षिणाः ॥"
बुधप्रीत्यर्थं देयहेम्ना सह सर्वा मूल्यतः समा इति केचित् । अस्मिन्पक्षे षोडशमापविशिष्ट-
हेमत्वाचित्सुवर्णपदाः सामंजस्यापत्तेस्तादृशसुवर्णमूल्यं प्रत्येकमिति परे । यद्वल्पमूल्येषु तथा हेमा

---

१ द्रु–मद्रः । २ ऋ. सं. ४।७।१।

देय यथा सर्वा प्रत्येक दशमाषसुवर्णेन समा भवतीति तु सम्यक् ।
' सर्वेषामथवा गावो गुर्वी येन तुष्यति । स्वमत्रेण प्रदातव्या सर्वा सर्वत्र दक्षिणा ॥"
स्कान्दे " केतवे छागमासानि सर्वेषामेव कांचनमिति "। तत्रैव
" यस्तु पीडाकरो नित्य स्वल्पवित्तस्य वा ग्रह । तमेव पूजयेद्भक्त्या दक्षिणाभि स्वशक्तित " ॥
शानोद्योते आश्वलायन ५
" यथाशक्ति ततो विप्रानृत्विजश्चेतरानपि । एकमेकाहुतौ विप्र होमे त्वन्नेन भोजयेत् ॥
" अत्यर्थो मध्यमश्चापि विप्रमेक शताहुतौ । सहस्रस्य हुतेर्वैक जघन्योऽपि प्रभोजयेत् ॥ "
तत्रैव " तस्माद्दातुमशक्तोऽपि दक्षिणा चान्नमेव वा । जपे प्रणामै स्तोत्रैश्च तोषयेत्सर्पयद्गुरु ॥ "
स्कान्दे
" यथा ग्रहो द्विजस्तद्वद्विशेयो वेदपारग । तोषयन् मृदुवस्त्राद्यैस्तुष्टमेन विसर्जयेत् ॥ १०
" अन्नहीनो दहेद्राष्ट्र मन्त्रहीनश्च ऋत्विज । यजमानमदक्षिण्यो नास्तियज्ञसमो रिपु ॥ "
तत्रैव
" यथा समन्वित यत्र यन्त्रेण प्रतिहन्यते । एव समुच्छ्रित घोर शीघ्र शात्या विनश्यति ॥
" अहिंसकस्य दातस्य धर्मार्जितधनस्य च । नित्य च नियमस्थस्य सदा सानुग्रहा ग्रहा ॥
" ग्रहा गावो नरेन्द्राश्च ब्राह्मणाश्च विशेषत । पूजिता पूजयन्त्येते निर्दहन्त्यपमानिता ॥ १५
" ग्रहाणामिदमातिथ्य कुर्यात्सवत्सरादपि । आरोग्यबलसपन्नो जीवेच शरदा शत ॥ "
मात्स्ये ' एव समग्राणिष्पाद्य सर्वान्देवान्विसर्जयेत् " । तत्र मत्र
" यातु देवगणा सर्वे पूजामादाय पार्थिवीं । इष्टकामप्रसिद्ध्यर्थं पुनरागमनाय च ॥ "
भविष्योत्तरे
" तत समाप्ते यज्ञ तु कारयेत्तु महोत्सव । शङ्खतूर्यनिनादेन ब्रह्मघोषरवेण च ॥ " २०
मात्स्ये ( अ ९३ श्लो ७८ । ८३ । ८४ । १४० । १४१ । )
" अनेन विधिना यस्तु ग्रहपूजा समारभेत् । सर्वान्कामानवाप्नोति प्रेत्य स्वर्गे महीयते॥
" सर्वेष्वायुतहोमोऽय नवग्रहमख स्मृत । विवाहोत्सवयज्ञेषु प्रतिष्ठादिषु कर्मसु ॥
" निर्विघ्नार्थं मुनिश्रेष्ठ तथाद्भुता द्भुतेषु च । वश्यकर्माभिचारादि तथैवोच्चाटनादिषु ॥
" नवग्रहमख कृत्वा तत काम्य समारभेत् । अन्यथा फलद पुसा न काम्य जायत क्वचित्॥ २५
" तस्मादयुतहोमस्य विधान तु समाचरेत् " ॥ विवाहत्यादिना च विवाहादिषु काम्येषु कर्मस्वगत्वमुक्त । अत्र ग्रहस्वरूपवर्णदेशमोत्राग्निस्थानमुखाकारस्थापनहोममन्त्रचन्दनधूपदीपनैवेद्य समिद्दक्षिणाधिदेवताप्रत्यधिदेवतोपदेशकवाक्येषु ग्रहाणा स्वरूपनिर्देशस्थापनहोममन्त्रोपदेशक वाक्येषु वाधिदेवताप्रत्यधिदेवताविनायकादिपचलोकपालानामनेकस्मृतिपुराणभेदेन भूयो विसंवादैर्भिरनेके पर्यायशब्दैरुपस्थितनानेकवैधशब्दनियम । नापि मन्त्रवर्णनैक- ३०
शब्दोपस्थिति । शब्दविशेषैर्देवता अनूद्य तत्स्मारकतया मन्त्रविनियोगेन मन्त्राणा देवता-

---

१ य-इ—प्रदानार्थ, छ-क-स—र्थे, २ क-ड—समारभेत् ३ ड-स—तत्स्मारकतया ।

प्रापकत्वायोगात् । तेषा बाहुल्येनाप्पष्टलिंगं बाध्य । अतो द्रव्ययागादिषु स्वरूपातिनिर्देशकस्मृति-मन्त्रवर्णोपस्थितशब्दानाम-यतमेन शब्देनोद्देशो ग्रहादीनामिति शिष्टाचारोऽप्येव । अत्र व्याहृति-करणकेऽयुतहोमेऽग्निवायुसूर्यप्रजापतय एव देवता । न नवग्रहा । ऐंद्रादिवत्तत्प्रकाशकत्वेन विनियोगाभावात् । अत एव पारिजाते

५ "ॐ भूर्भुव सुवश्चेति तिस्रो व्याहृतयो जपेत् । आमिश्र होमे निसृभिश्चतुर्थी स्यात्समासत"॥ इति । समस्ताभिरेव होम । स चाग्निवायुसूर्यदैवत्य इति तु मदन । सर्वथा व्याहृतिहोमे न ग्रहा देवता इति । प्रधान चात्र ग्रहपूजा तद्धोमोऽयुतहोमादिश्च । "श्रीकाम शांतिकामो वा ग्रहयज्ञ समाचरेद्"इत्यादिना तत्पूजातद्धोमयो फलसबधात् । "ग्रहयज्ञस्त्रिध"इत्युक्त्वा "प्रथमोऽयुतहोम" इत्यादिनाऽयुतलक्षकोटिहोमाना ग्रहयज्ञविशेषत्वेनोपक्रमात् "तस्मादयुत-

१० होमस्य विधान तु समाचरेद्"इत्युपसहाराच्च। ग्रहा ग्रहदेव यत्कर्मसमूह "प्राणभृत उपदधातीति"-वल्लिंगसमवायेन ग्रहयज्ञशब्द । तातचरणास्त्वयुतहोमादीनामेव प्राधान्य ग्रहहोमस्त्वगमित्याहु । तदाशय न जाने । यो हि कामशब्देन फलसबध "श्रीकाम शांतिकामो वा ग्रहयज्ञ समाचरेद्"इत्यादि स तावद्ग्रहपूजाहोमयोरेवोचित । ग्रहसबधप्राप्तेर्ग्रहयज्ञश दस्य तन्नामत्वात् । न चायुतहोमादीना फलसबध तत्प्रकरणपाठाद्ग्रहपूजाहोमयोरगतेति वाच्य । वैपरीत्यस्यापि

१५ सुवचत्वात् । अयुतहोमादिश दाना ग्रहयज्ञसामानाधिकरण्येन ग्रहयज्ञनामत्व तु लिंगसमवायेन न तदगत्वेन आर्थवादिक । फलसबधस्तु

" अनेन विधिना यस्तु ग्रहपूजा समाचरेत् । सर्वान्कामानवाप्नोति प्रेत्य स्वर्गे महीयते ॥"

इत्यत्र यजदेवपूजासगतिकरणदानेष्वित्यनुशिष्टयो पूजाहोमयो "सदैवायुतहोमोऽयमि"त्यानुपक्रम्य "निर्विघ्नार्थं मुनिश्रेष्ठ" इत्यादिना त्वयुतहोमादीनामपि स्मृतिषु तु प्राय आर्थवादिकमेव फल ।

२० अत्र कामशब्दोपनीते फले सत्यार्थवादिक सबध्यते न वेति तु विचारातर । किंच याज्ञवल्क्यादिस्मृतिषु न तावदयुतहोमादीना विधिर्नाप्यनुवाद । अतो ग्रहपूजाहोमयो प्राधान्याभावे तन्त्रत्वेतिकर्तव्यतासबधो न स्यात् । अतो ग्रहपूजाहोमयोरपि प्राधान्य भाति । अत एव क्वचित्केवलग्रहमुखेषु तदगकेषु च शांतिकादिकर्मस्वेकस्मृत्युक्तागप्रधानादरेण स्मृत्यतरोक्त प्रधानभूतायुतादिहोम विनापि शाखातरोक्तग्रहयोगाभ्यास विनैकशाखीयग्रहयागाभ्यासमात्राणामिव

२५ पूजा ग्रहदेवत्यहोमयोरेवानुष्ठान कथचित् शिष्टाना सगच्छते । ग्रहपूजाहोमयोरगत्वे त्वगमात्रानुष्ठानमेव स्यात् ।

## अथ ग्रहादीना लक्षणानि ।

मात्स्य ( अ ९४ श्लो १ )

"पद्मासन पद्मकर पद्मगर्भसमद्युति । सप्ताश्वरथसस्थश्च द्विभुज स्यात्सदा रवि ॥

३० "श्वेत श्वेताबरधरो दशाश्व श्वेतभूषण । गदापाणिर्द्विबाहुश्च कर्तव्यो वरद शशी ॥

" रक्तमाल्याबरधर शक्तिशूलगदाधर । चतुर्भुजो मेषगमो वरद स्याद्धरासुत ॥

---

१ ख-लिंगसबाध । २ ख-नवग्रहा । ३ ट-रमन । ४ ड क । ५ ख-विशेषत्वेन । ६ अङ्ग-समवायेन आर्थवादिक । ७ क्षड—( ग्रहग ) गतशाख्याभ्यासात ( विनैक— )

" पीतमाल्यांबरधरः कर्णिकारसमद्युतिः । खड्गचर्मगदापाणिः सिंहस्थो वरदो बुधः ॥
" देवदैत्यगुरू तद्वत्पीतश्वेतौ चतुर्भुजौ । दंडिनौ वरदौ कार्यौ साक्षसूत्रकमंडलू ॥
" इंद्रनीलद्युतिः शूली वरदो गृध्रवाहनः । बाणबाणासनधरः कर्तव्योऽर्कसुतः सदा ॥
" करालवदनः खड्गचर्मशूली वरप्रदः । नीलः सिंहासनस्थश्च राहुरत्र प्रशस्यते ॥
" धूम्रा द्विबाहवः सर्वे गदिनो विकृताननाः । गृध्रासनगता नित्यं केतवः स्युर्वरप्रदाः ॥ ५
" सर्वे किरीटिनः कार्या ग्रहा लोकहितावहाः । अंगुलेनोच्छ्रिताः सर्वे शतमष्टोत्तरं सदेति " ॥

अथाधिदेवताप्रत्यधिदेवतालक्षणानि ।

विष्णुधर्मोत्तरे

" पंचवक्त्रो वृषारूढः प्रतिवक्त्रं त्रिलोचनः । कपाली शूलखट्वांगी चंद्रमौलिः सदाशिवः ॥
" अक्षसूत्रं च कमलं दर्पणं च कमंडलुं । उमा बिभर्ति हस्तेषु पूजिता त्रिदशैरपि ॥
" कुमारः षण्मुखः कार्यः शिखंडकविभूषणः । रक्तांबरधरो देवो मयूरवरवाहनः ॥ १०
" कुक्कुटश्च तथा घंटास्तस्य दक्षिणहस्तयोः । पताका वैजयंती स्याच्छक्तिः कार्या च वामयोः ॥
" विष्णुः कौमोदकीपद्मशंखचक्रधरः क्रमात् । प्रदक्षिणं दक्षिणाधः कराद्यारभ्य नित्यशः ॥
" पद्मासनस्थो जटिलो ब्रह्मा कार्यश्चतुर्भुजः । अक्षमालां स्रुवं बिभ्रत्पुस्तकं च कमंडलुं ॥
" चतुर्दंतगजारूढो वज्री कुलिशभृत्करः । शचीपतिः प्रकर्तव्यो नानाभरणभूषितः ॥
" ईषन्नीलो यमः कार्यो दंडहस्तो विजानता । रक्तदृक्पाशहस्तश्च महामहिषवाहनः ॥ १५
" कालः करालवदनो नीलांगश्च विभीषणः । पाशहस्तो दंडहस्तः कार्यो वृश्चिकरोमवान् ॥
" अर्वाच्यवैवस्वताकारं द्विभुजं सौम्यदर्शनं । दक्षिणे लेखनीं चित्रगुप्तं वामे तु पत्रकं ॥
" पिंगलश्मश्रुकेशाक्षः पीनांगजठरोऽरुणः । छागस्थः साक्षसूत्रोऽग्निः सप्तार्चिः शक्तिधारकः ॥
" चिन्हितं चमरेणास्य करमन्यं प्रकल्पयेत् ।
" आपः स्त्रीरूपधारिण्यः श्वेता मकरवाहनाः । दधाना पाशकलशौ मुक्ताभरणभूषिताः ॥ २०
" शुक्लवर्णा मही कार्या दिव्याभरणभूषिता । चतुर्भुजा सौम्यवपुश्चंडांशुसदृशांबरा ॥
" रत्नपात्रं सस्यपात्रं पात्रमोषधिसंयुतं । पद्मं करे च कर्तव्यं भुवो यादवनंदन ॥
" दिङ्गागानां चतुर्णां सा कार्या पृष्ठगता तथा " । विष्णोरिंद्रस्य चोक्तं
" वामे शच्या करे कार्या सौम्या संतानमंजरी । वरदा मंडिता कार्या द्विभुजा च तथा शची ॥
" यज्ञोपवीती हंसस्थ एकवक्त्रश्चतुर्भुजः । अक्षसूत्रं स्रुवं बिभ्रत्कुंडिकां च प्रजापतिः ॥ " २५
अक्षं अक्षमाला । कुंडिका कमंडलुः ।
" अक्षसूत्रधराः सर्पाः कुंडिकापुच्छभूषणाः । एकभोगास्त्रिभोगा वा सर्वे कार्याश्च भीषणाः " ॥
ब्रह्मलक्षणमुक्तं
" ग्रहाणां दक्षिणे पार्श्वे स्थापयेदधिदेवताः । ग्रहाणामुत्तरे पार्श्वे न्यसेत्प्रत्यधिदेवताः ॥ "

अथ विनायकादिलक्षणानि

३०
" चतुर्भुजस्त्रिनेत्रश्च कर्तव्योऽत्र गजाननः । नागयज्ञोपवीतश्च शशांककृतशेखरः ॥

---

१ अ—कर्णे । २ क्ष—उदीच्य ध ड रा द र क्ष अ य इ—अपीच्य ।

" दक्षे दंतं करे दद्याद्द्वितीये चाक्षसूत्रकं । तृतीये परशुं दद्याच्चतुर्थे मोदकं तथा ॥
" शक्तिं बाणं तथा शूलं खड्गं चक्रं च दक्षिणे । चंद्रबिंबमधो वामे खेटमूर्ध्वे कपालकं ॥
" सुकंकटं च बिभ्राणा सिंहारूढा तु दिग्भुजा । एषा देवी समुद्दिष्टा दुर्गा दुर्गविहारिणी ॥
" धावद्धरिणपृष्ठस्थो ध्वजधारी समीरणः । वरदानकरो धूम्रवर्णः कार्यो विजानता ॥
५ " नीलोत्पलाभं गगनं तद्वर्णाम्बरधारि च । चंद्रार्कहस्तं कर्तव्यं द्विभुजं सौम्यसंभवत् ॥
" द्विभुजौ देवभिषजौ कर्तव्यौ रूपसंस्थितौ । तयोरोषधयः कार्या दिव्या दक्षिणहस्तयोः ।
" वामयोः पुस्तकौ कार्यौ दर्शनीयौ तथा द्विजाः । एकस्य दक्षिणे पार्श्वे वामे चान्यस्य यादव ।
" नारीयुतं प्रकर्तव्यं पुरुषं चारुदर्शनं । रत्नभांडकरं कार्यं चंद्रशुक्लाम्बरं तथा " ॥
अथ लोकपालरूपाणि । तत्रेंद्राग्नियमरूपाण्यधिप्रत्यधिदेवतोक्तयोर्क्तानि
१० " खड्गचर्मधरो वालो निर्ऋतिर्नरवाहनः । ऊर्ध्वकेशो विरूपाक्षः करालः कालिकाप्रियः ॥
" नागपाशधरो रक्तभूषणः पद्मिनीप्रियः । वरुणोऽम्बुपतिः स्वर्णवर्णो मकरवाहनः " ॥
वायुर्विनायकादिपंचकं उक्तः । सोमो ग्रहेषु । अनंतः सर्पः । स प्रत्यधिदेवतासु ।

इत्ययुतहोमः ॥

## अथ लक्षहोमः ।

१५ तत्र ग्रहपीडादीनि निमित्तान्युक्तान्ययुतहोमारंभो देवीपुराणेऽपि
" लक्षहोमं प्रवक्ष्यामि यथा प्रोक्तं तु शंभुना । भूमिकंपे दिशां दाहे ग्रहयुद्धे उपस्थिते ॥
" केतुसंदर्शने चैव आदित्यस्य च कंपने । कृष्णवर्णेऽथ वा सूर्ये तथा छिद्रसमन्विते ॥
" रक्तवृष्टिस्तथा नद्यो विपरीतां वहंति च । निर्गतं गगनाद्धूमं वारिमध्ये च यत्स्थितं ॥
" उपसर्गास्तथा लोके रक्षंतु क्षयकारकाः । यस्य राशौ ग्रहाः पंच अथ सप्त सुराधिप ॥
२० " ग्रहणं चंद्रसूर्यस्य ग्रहैर्वाऽष्टमसंस्थितैरि"त्यादि । तथा
" कंपनं स्वेदनं गात्रे अश्रुपातार्थजल्पनं । देवतानां सुराध्यक्ष उत्पाताः क्षयकारकाः ॥
" लक्षहोमं प्रकुर्वीत कोटिहोममथापि वेति "॥ मात्स्ये ( ९२।९३–९५; ९७, ९९, १००)
" अस्मादृशगुणः प्रोक्तो लक्षहोमः स्वयम्भुवा । आहुतीभिः प्रयत्नेन दक्षिणाभिस्तथैव च ॥
" द्विहस्तविस्तृतं तद्वच्चतुर्हस्तायतं पुनः । लक्षहोमे भवेत्कुंडं योनिवक्त्रं त्रिमेखलं ॥ "
२५ व्यासतो द्विहस्तविस्तृतं फलतश्चतुर्हस्तायतं भवतीत्यर्थः । तथा
" तस्य चोत्तरपूर्वेण त्रिवस्तित्रयसंमितं । प्रागुदक्प्रवणं तद्वच्चतुरस्रं समंततः ॥
" विष्कंभार्द्धोच्छ्रितं प्रोक्तं स्थंडिलं विश्वकर्मणा । संस्थापनाय देवानां वप्रत्रयसमावृतं ॥
" तस्मिन्नावाहयेद्देवान् पूर्ववत्पुष्पतंडुलैः । गरुत्मानधिकस्तत्र संपूज्यः श्रियमिच्छता ॥
" सामध्वनिशरीरस्त्वं वाहनं परमेष्ठिनः । विषपापहरो नित्यमतः शांतिं प्रयच्छ मे ॥ "

---

१ क्ष–सकटक । २ खघ–सिंहरूढा, इ–सिंहरूढा इ–य ३ दय–चतुर्भुज, इं–आ–४ इङ्ग–देवोक्तानि, क–देवनोक्तानि, घ–देवतोक्ताकानि, देवनोक्तयोक्तानि । ५ क्षड–अनन सर्प प्रत्यधिदेवतासु, इदयघ–अनंत. प्रत्यधिदेवतासु । ६ क्षख–देवीपुराणे । ७ क्ष–द्विहस्त ।

अयं गरुडावाहनमंत्रः

" पूर्ववत्कुंभमामंत्र्य तद्वद्धोमं समाचरेत् । सहस्राणां शतं हुत्वा समित्संख्यादिकं पुनः ॥ "
पूर्ववदेव समिदाज्यचरुहोमं पूर्वोक्तैरेव मंत्रैः कुर्यात् । गुरुमतेस्तु " सुपर्णोऽसि गरुत्मानिति "
' इदं मित्रमिति " ( ऋ. सं. २।३।२२ ) वा मंत्रः ।
' घृतकुंभवसोर्धारां पातयेदनलोपरि । उदुंबरीमथार्द्रां च ऋज्वीं कोटरवर्जितां ॥ ५
' बाहुमात्रां स्रुचं कृत्वा ततः स्तंभद्वयोपरि । घृतधारां तथा सम्यगग्नेरुपरि पातयेत् ॥
' श्रावयेत्सूक्तमाग्नेयं वैष्णवं रौद्रमैंद्रवं । महावैश्वानरं सम्यग्ज्येष्ठसाम च पाठयेत् ॥
' स्नानं च यजमानस्य पूर्ववत्स्वस्तिवाचनं ॥
' दातव्या यजमानेन पूर्ववद्दक्षिणा पृथक् । कामक्रोधविहीनेन ऋत्विग्भ्यः शांतचेतसा ॥
' तद्वद्द्वादश चाष्टौ वा लक्षहोमेऽपि ऋत्विजः । कर्तव्याः शक्तितस्तद्वच्चतुरो वा विमत्सराः ॥" १०
मझाचार्यसहितानामेवेयं संख्येति केचित् ।
' नवग्रहमखात्सर्वं लक्षहोमे दशोत्तरं । दद्याच्च मुनिशार्दूल भूषणान्यपि शक्तितः ॥
' शयनानि च वस्त्राणि हैमानि कटकानि च । कर्णांगुलीपवित्राणि कंठसूत्राणि शक्तितः ॥
' न कुर्याद्दक्षिणाहीनं वित्तशाठ्येन मानवः । अदत्वा होमलोपाद्वा कुलक्षयमवाप्नुयात् ॥
" अन्नदानं यथाशक्त्या कर्तव्यं भूतिमिच्छता । मंत्रहीनं कृतो यस्माद्दुर्भिक्षफलदो भवेत् "॥ तथा १५
" तस्मात्पीडाकरोऽतीव य एव भवति ग्रहः । तमेव पूजयेद्भक्त्या द्वौ वा त्रीन्वा यथाविधि" ॥ तथा
" पूज्यते शिवलोके च वस्वादित्यमरुद्गणैः । यावत्कल्पशतान्यष्टौ अथ मोक्षमवाप्नुयात् "॥ तथा
" पुत्रार्थी लभते पुत्रं धनार्थी लभते धनं । भार्यार्थी लभते भार्यां कुमारी च शुभं पतिम् ॥
" भ्रष्टराज्यस्तथा राज्यं श्रीकामः श्रियमाप्नुयात् । य यं प्रार्थयते कामं तं तं प्राप्नोति पुष्कलम् ॥
" निष्कामः कुरुते यस्तु परं ब्रह्म स गच्छति ॥ " २०

इति लक्षहोमः ॥

## अथ कोटिहोमः ।

तत्राप्ययुतलक्षहोमप्रकरण एव निमित्तान्युक्तानि । भविष्योत्तरेऽपि संवरण उवाच
" भगवन्महदुत्पातसंभवे भूप्रकंपने । निर्घाते पांसुवर्षे च ग्रहभंगे तथैव च ॥
" जन्मनक्षत्रपीडासु अनावृष्टिभयेषु च । क्रूरासु ग्रहपीडासु दुर्भिक्षे राष्ट्रविप्लवे ॥ २५
' व्याधीनां संभवे जाते शरीरे चातिपीडिते । क्लेशे महति चोत्पन्ने किं कर्तव्यं नरोत्तमैः ॥
' स्वर्गस्य साधनं यत्तत्कीर्तिदं धनदं तथा । प्रब्रूहि मनुजश्रेष्ठ तथाऽऽरोग्यप्रदं नृणां " ॥
सनत्कुमार उवाच

शृणु राजन् प्रवक्ष्यामि शांतिकर्मण्यनुत्तमं । कोटिहोमाख्यमतुलं सर्वकामफलप्रदं ॥
' ब्रह्महत्यादिपापानि येन नश्यंति तत्क्षणात् । उत्पाताः प्रशमं यांति महत्संपद्यते सुखम् ॥ ३०

---

१ ज्ञ–न्मत । २ ज्ञ–र्द्रौ; इयद्–समर्था । ३ अ—शाठ्येन । ४ ज्ञ–न—वे । ५ ज्ञ शुभम् ।

" विधानं तस्य वक्ष्यामि शृणुष्वैकमना भव ॥

" देवागारे च भवने तीर्थे वा शिवसन्निधौ । पर्वते वाऽथ कुर्वीत य इच्छेत्क्षेममात्मनः ॥

" शुभनक्षत्रयोगे च वारे सर्वगुणान्विते । यजमानस्यानुकूले कोटिहोमं समाचरेत् ॥

" पूजयित्वा प्रयत्नेन ब्राह्मणं वेदपारगं । वस्त्रैर्विभूषणैश्चैव गंधमाल्यानुलेपनैः ॥

५ " प्रणम्य विधिवत्तस्मै चात्मानं विनिवेदयेत् ॥

" त्वं मे यतः पिता माता त्वं गतिस्त्वं परायणं । त्वत्प्रसादेन विप्रर्षे सर्वं मे स्यान्मनोगतं ॥[१]

" आपद्विमोक्षाय च मे कुरु यज्ञमनुत्तमं । कोटिहोमाख्यमतुलं शांत्यर्थं सार्वकामिकं ॥

" पुरोहितस्ततः प्राज्ञः शुक्लांबरधरः शुचिः । ब्राह्मणैः संवृतः पुण्यैः संयतः सुसमाहितैः ॥

" भूमिभागे समे शुद्धे प्रागुदक्प्रवणे तथा । पुण्याहं वाचयेत्पूर्वं कृत्वा विप्रांस्तु पूजयेत् ॥

१० " ततः समाहितो विप्रैः सूत्रयेन्मडपं शुभम् । उत्तमं शतहस्तं तु तदर्द्धेन तु मध्यमं ॥

" अधमं तु तदर्द्धेन शक्तिकालाद्यपेक्षया । मध्ये तु मंडपस्यापि कुंडं कुर्याद्विचक्षणः ॥

" अष्टहस्तप्रमाणेन आयामेन तथैव च ॥

" मेखलात्रितयं तस्य द्वादशांगुलविस्तृतं । तत्प्रमाणं तथा योनिं कुर्वीत सुसमाहितः ॥

" कुण्डस्य पूर्वभागे तु वेदीं कुर्याद्विचक्षणः । चतुर्हस्तां समा चैव हस्तमात्रोच्छ्रितां नृप ॥

१५ " स्थापनं च सदेवानां कुर्याद्यत्नेन बुद्धिमान् ॥

" उपलिप्य ततो भूमिं मंडपस्य प्रकल्पयेत् । स्थापयेद्दिक्षु सर्वासु तोरणानि विचक्षणः ॥

" एवं संभृतसंभारः पुरोधाः सुसमाहितः । पुण्याहजयघोषेण होमकर्म समाचरेत् ॥

" स्थापयित्वा सुरान् वेद्यां वक्ष्यमाणानरिंदम ॥

" ब्रह्माणं पूर्वभागे तु मध्ये देवं जनार्दनं । पश्चिमे तु तथा रुद्रं वसूनुत्तरतस्तथा ॥

२० " ईशान्यां च ग्रहान्सर्वानाग्नेय्यां मरुतस्तथा । वायुं सौम्यां तथैशान्यां लोकपालान्क्रमेण तु ॥

" एवं संस्थाप्य विबुधान् यथास्थानं नृपोत्तम । पूजयेद्विधिवद्वस्त्रैर्गंधमाल्यानुलेपनैः ॥

" वेदोक्तमंत्रैस्तल्लिंगैः पुराणोक्तैः पृथक् पृथक् ॥

" आदित्या वसवो रुद्रा लोकपालास्तथैव च । ब्रह्मा जनार्दनश्चैव शूलपाणिर्महेश्वरः ॥

" अत्र सन्निहिताः सर्वे भवंतु सुखभागिनः । पूजां गृण्हंतु सर्वत्र मया भक्त्योपपादितां ॥

२५ " प्रकुर्वंतु शुभं सर्वे यज्ञकर्तुः समाहिताः ॥

" एवं संपूजयित्वा तान् देवान् यत्नेन शुद्धधीः । नैवेद्यैर्विविधैर्भक्ष्यैः फलैश्चैव सुशोभितैः ॥

" ततस्तु तैर्द्विजैः सर्वैः कुंडस्य विधिपूर्वकं । कुर्यात्संस्कारकरणं यथोक्तं वेदवित्तमैः ॥

" ततः समाव्हयेद्वन्हिं नाम्नाख्यातं घृतार्चितं । नियोजयेद्द्विजांस्तत्र शतसंख्यान्नृपोत्तम ॥

" अलाभे तु बहूनां च यथालाभं नियोजयेत् ।

---

१ ग्र—ने । २ अ-ढ फ-र-क्ष—भोजयेत् । ३ घफज—भूम्यां । ४ ग्र—तु । ५ ख-मा
६ ङघफङनय—च ।

" विद्यावित्तवयोवृद्धान् गृहस्थान् संयतेन्द्रियान् । स्वकर्मनिरतान् शुद्धान् ज्ञानशीलान्प्रयत्नतः ॥
" चिंतयेत्तत्र देवेश पश्चास्य नृप पावकं । मुखानि तस्य चत्वारि सप्त जिह्वानि पार्थिव ॥
" एकजिह्वामयेकं तु तत्प्रभृत सार्वकामिकं । धूमायमाने न वृथा होतव्यं ज्वलितेऽनले[1] ॥ "
" अग्निः पूर्वमुखे कार्यो यजुर्भिश्चोत्तरामुखे । सामभिः पश्चिमे कार्यः पूर्ववद्दक्षिणामुखे ॥
" आघारावाज्यभागौ तु पूर्वं हुत्वा विचक्षणः । परितश्च परिस्तीर्णे कल्पिते च तथासने ॥ ५
" ब्राह्मणः पूर्वमेव[2] तु सर्वं पश्चात्समाचरेत् । होमो व्याहृतिभिश्चैव सर्वस्तत्र विधीयते ॥
" प्रणवादिभिश्च तल्लिंगैः स्वाहाकारांतयोजितैः । जुहुयात्सर्ववेदानां वेदा ये व्यावकल्पिताः ॥
" एवं प्रकल्पयेयश्च कोटिहोमाख्यमुत्तमं । तिलाः कृष्णा घृताभ्यक्ताः किंचिद्व्रीहिसमन्विताः ॥
' किंचिद्यवसमायुक्ता ' इति क्वचित्पाठः । " होतव्याः कोटिहोमे तु समिधः सुपलाशजाः ॥
" पूर्णे पूर्णे सहस्रे तु दद्यात्पूर्णाहुतिं शुभाम् । पञ्चमे तन्मुखे राजन् सर्वकामार्थसिद्धये ॥ १०
" पूर्णाहुत्यं समारंभातः कोटिहोमे नराधिप । सहस्राणि नृपश्रेष्ठ दश शास्त्रविशारदैः ॥
" प्रारंभदिनमारभ्य ब्राह्मणैर्ब्रह्मवादिभिः । होतव्यं यजमानैश्च अथवा सुपुरोहितैः ॥
" क्रोधलोभादयो दोषा वर्जनीयाः प्रयत्नतः । यजमानेन राजेंद्र सर्वकामानभीप्सता " ॥

मात्स्ये ( अ ९३ श्लो० ११९।१२०।१२१ )

" *अस्माच्छतगुणः प्रोक्तः कोटिहोमः स्वयंभुवा । आहुतीभिः प्रयत्नेन दक्षिणाभिः फलेन च ॥* १५
" पूर्ववद्ग्रहदेवानामावाहनविसर्जनं । होममंत्रास्त एवोक्ताः स्नानदानं तथैव च ॥
" कुंडमंडपवेदीनां विशेषोऽयं निबोध मे ॥
" कोटिहोमे चतुर्हस्तं चतुरस्रं च सर्वशः । योनिवक्रद्वयोपेतं तदप्याहुस्त्रिमेखलं ॥ "

सर्वशः चतुर्हस्तमिति विस्तारायामखातेष्वित्यर्थः । योनिवक्रद्वयोपेतमित्येका योनिः पश्चिमतोऽन्या दक्षिणत इति हेमाद्रिः । वक्रः कंठः । योनिकंठयुतमिति पितामहचरणाः । २०

मात्स्ये ( अ ९३ श्लो १२६-१४० )

" वेदिश्च कोटिहोमे स्याद्वितस्तीनां चतुष्टयं । चतुरस्रा समाहूता त्रिभिर्वप्रैः समावृता ॥
' वप्रप्रमाणं प्रोक्तं वै वेदिकायास्तथोच्छ्रयं " ॥ उक्तमयुतहोमे
' तथा षोडशहस्तः स्यान्मंडपश्च चतुर्मुखः । पूर्वद्वारे च संस्थाप्य बह्वृचं वेदपारगं ॥
' याजुर्वेदं तथा याम्ये पश्चिमे सामवेदिनं । अथर्ववेदिनं तद्वदुत्तरे स्थापयेद्बुधः ॥ २५
' अष्टौ तु होमकाः कार्या वेदवेदांगवेदिनः ।
' एवं द्वादश तान् विप्रान् वस्त्रमाल्यानुलेपनैः । पूर्ववत्पूजयेद्भक्त्या सर्वाभरणभूषितैः ॥
' रात्रिसूक्तं च रौद्रं च पावमानं सुमंगलं । पूर्वतो बह्वृचः शांतिं पठन्नास्ते *उदङ्मुखः* ॥
' शाक्रं रौद्रं च सौम्यं च कौष्मांडं शांतिमेव च । पठतु दक्षिणे द्वारि याजुर्वेदिकमुत्तमं ॥
' सौपर्णमथ वैराजमाग्नेयं रौद्रसंहिता । ज्येष्ठसाम तथा शांतिं छंदोगः पश्चिमे पठेत् ॥ ३०

---

१ ङछडन-वुध्वा रकघमक्ष-वृद्धान् । २ घरक्षफखकअडन-ते ईं वे । ३ झ वान इ-ब्राह्मण । झ-ह्रु ५ ड-भक्ता । ६ ख-दि । ७ ड-वत्र । ८ झ-वप्रमानमया प्रोक्त । ९ ङझखक्ष-यजुर्वद । १० क्षक म-यग । ११ क्षखधन-वेदिक इ-यजुर्वेदक ।

" शांतिसूक्तं चैवं तथा तथा शाकुनकं शुभं । पौष्टिकं च महाराजमुत्तरेणाप्यथर्वणि ॥
" पंचभिः सप्तभिर्वाऽथ होमः कार्योऽत्र पूर्ववत् । स्नाने दाने च मंत्राः स्युस्त एव मुनिसत्तम ॥
" वसोर्द्धाराविधानं तु लक्षहोमवदिष्यते ॥
" अनेन विधिना यस्तु कोटिहोमं समाचरेत् । सर्वान्कामानवाप्नोति ततो विष्णुपदं व्रजेत् ॥
५ " यः पठेच्छृणुयाद्वाऽपि ग्रहशांतित्रयं नरः । सर्वपापविशुद्धात्मा पदमिंद्रस्य गच्छति ॥
" अश्वमेधसहस्राणि दश चाष्टौ च धर्मवित् । कृत्वा यत्फलमाप्नोति कोटिहोमात्तदश्नुते ॥
" ब्रह्महत्यासहस्राणि भ्रूणहत्यार्बुदानि च । नश्यंति कोटिहोमेन यथाशार्ङ्गभाषितं ॥ "

इति कोटिहोमः ॥

## अथ शतमुखकोटिहोमः ।

१० संवरण उवाच

" बहुप्रकारकर्मणो ब्रह्मन् कोटिहोमः सुदुष्करः । कालेन महता चैव कर्तुं शक्यः कथंचन ॥
" नियमा ब्रह्मचर्याद्या दुष्करा इति मे मतिः । निरोधो ब्राह्मणानां च भूशय्यादि सुदुष्करः ॥
" कार्याणामलघीयस्त्वात्पर्वकालव्यपेक्षया ॥
" एतद्विज्ञाय तं ब्रह्मन् सर्वशास्त्रेषु पठ्यते । कोटिहोमस्य संक्षेपं वद मे ब्रह्मसंभव ॥ "

१५ सनत्कुमार उवाच

" शताननो दशमुखो द्विमुखैकमुखैस्तथा । चतुर्विधो महाराज कोटिहोमो विधीयते ॥
" कार्यस्य गुरुतां ज्ञात्वा नैकट्यमथ पर्वणः । यथासंक्षेपतः कार्यः कोटिहोमस्तथा शृणु ॥
" कृत्वा कुंडशतं दिव्यं यथोक्तं मानसंमितं । एकैकस्मिंस्तथा कुंडे दश विप्रान्नियोजयेत् ॥
" सद्यः पक्षे तु विप्राणां सहस्रं परिकीर्तितं । एकस्थानप्रणीतेऽग्नौ सर्वतः परिभाविते ॥ "

२० एकस्थानात्सर्वतः सर्वस्मिन् कुंडे परिभाविते संस्कृतेऽग्नौ प्रणीत इत्यर्थः ।

" होमं कुर्युर्द्विजाः सर्वे कुंडे कुंडे यथोदितं ॥
" यथा कुंडबहुत्वेऽपि राजसूये महाक्रतौ । न चाग्निबहुत्वं स्यान्न च यज्ञोऽपि भिद्यते ॥
" तथा कुंडशतेऽप्यत्र घृतार्चिषि नियोजिते । एक एव भवेत्तत्रः कोटिहोमो न संशयः ॥
" एवं यैः क्रियते क्षिप्रं व्याकुलैः कार्यगौरवात् । शताननः स विज्ञेयः कोटिहोमो न संशयः ॥
२५ " स्वल्पैर्होमिभिः कार्यैः स्याद्दीर्घकालादिकेऽपि वा । तदा दशमुखः कार्यः कोटिहोमः शुभे मते ॥
" विप्राणां द्विशते तत्र प्रविभज्य नियोजयेत् । तेऽपि विज्ञातशीलाः स्युर्वृत्तवन्तो जितेंद्रियाः ॥

---

१ ख-घ तथा । २ क्षट-स्नानदाने, क, स्नानं दाने । ३ क्षफरटअक-चाष्टौ च, इ-दश चाष्टौ च । ४ ढकाअक्षर-दश, ख-देव । ५ क्षटन-विप्राहृदयर्यादा घ-निश्चयात्र । ६ ग-ढि-दे, नरअ-द्विमु-दुदर । ७ क्षकटअ-या । ८ कढ-दश । ९ क्षट-स्याने । १० ख-सर्वतः सर्वत ; फ-सर्वतःस्या... भारितेऽग्नौ । ११ फढन-चाग्निबहुत्वं स्यात्, नरत-नचाग्निबहुत्वं स्यात्, घ-तथाग्निबहुत्वं स्यात् । १२ म-न च यज्ञादि भिद्यते, रा-न च यज्ञोऽपि भावत । १३ फटक-नियोजिते, अ-नियोजयेत् । १४ रकथन-... १५ अथर्वांअ-च ।

" यत्र कुंडद्वयं कृत्वा विभज्य च विभावसुं । होमं कुर्युर्द्विजा भूयः संस्कृत्य विधिपूर्वकम् ॥
" शतं तत्र नियोज्यं च विप्राणां प्रविभज्य वै । मासेऽथ वाऽर्द्धमासे वा कार्य्यः काले ह्युपस्थिते॥
" तदापि द्विमुखः कार्यः कोटिहोमो विचक्षणैः ॥
" यदा तु स्वेच्छया यज्ञं यजमानः समापयेत् । कालेन बहुना राजंस्तदा चैकमुखो भवेत् ॥
" एककुंडस्थितो वन्हिरेकचित्तैः समाहितैः । यथालाभस्थितैर्विप्रैर्शान्तशीलैर्विचक्षणैः ॥ ५
" न संख्यानियमश्चात्र ब्राह्मणानां नरोत्तम । न कालनियमश्चैव स्वेच्छया यज्ञः ॥ उच्यते ॥
" आवृत्त्या कर्तुकामस्य चातुर्मास्यादिकर्मवत् । तदा प्रसक्तः कर्तव्यो यज्ञोऽयं सार्वकामिकः ॥
" अयमेकमुखो राजन् कालेन बहुना भवेत् । बहुविघ्नश्च कालो वै तस्मात्संक्षेपमाचरेत् ॥
" यतो वै वित्तमायुश्च चित्तं चैवास्थिरं सदा । अतः संक्षेपतः कार्यं धर्मकार्यं प्रशस्यते ॥
" ततः समाप्ते यज्ञे तु कारयेत्सुमहोत्सवं । शंखतूर्यनिनादेन ब्रह्मघोषरवेण च ॥ १०
" ततस्तु दक्षयेद्विप्रान् ऋत्विजः श्रद्धयान्वितः । एकैकं कनकैश्चैव कुंडलैर्विविधैर्नृप ॥
" गोशतं चैव दातव्यमश्वाना च शतं तथा । सहस्रं तु सुवर्णस्य सर्वेषामपि दापयेत् ॥
" ग्रामैर्गजै रथैरश्वैः पूजयेच्च पुरोहितं । दीनांधकृपणान् सर्वान् वस्त्रान्नैश्चापि पूजयेत् ॥
" ततश्चावभृथे स्नायात्तैर्घटैः पूर्वकल्पितैः । लक्षहोमोक्तमंत्रेण सदा विजयकारिणा ॥
" एवं समापयेद्यस्तु कोटिहोममलं शुभम् । तस्यारोग्यं प्रियाः पुत्रा आयुर्वृद्धिस्तथैव च ॥ १५
" सर्वपापक्षयश्चैव जायते नृपसत्तम । अनावृष्टिभयं चैव उत्पातभयमेव च ॥
" दुर्भिक्षग्रहपीडाश्च प्रशमं यांति भूतले ॥
" एतत्पुण्यं पापहरं सर्वकामफलप्रदं । सनत्कुमारमुनिना पार्थिवाय निवेदितं ॥
" सर्वोपसर्गशमनं भवनाशनं वा ये कारयंति मनुजा नृप कोटिहोमं ।
" भोगानवाप्य मनसोऽभिमतान् प्रकामं ते यांति शक्रसदनं भुवि शुद्धसत्वाः ॥ " २०

अथ यथैते साहस्राः सायस्का इत्येकसंज्ञयोपक्रांतेषु क्रमाम्नातेषु च निकायिसंज्ञकेषु यागेषु प्रथमस्याम्नातधर्मकस्य धर्मा उत्तरेष्वनाम्नातधर्मकेषु निकायित्वावांतरसामान्यात्साहस्र-सायस्कात्वैकनामकत्वाच्च प्रवर्त्तेत इत्यष्टमे निकायिनां तु पूर्वस्योत्तरेषु प्रवृत्तिः स्यादित्यत्र निरूपितं । तथेह " चतुर्विधो महाराज कोटिहोम " इति चतुर्णां कोटिहोमनामत्वावांतरे सामान्येन आम्नातधर्मकस्यैकमुखस्य धर्मा अनाम्नातधर्मकेषु द्विमुखादिषु प्रवर्त्तंते तेन तेषां विकृतित्वं । तत्र २५ द्विमुखे तावत्कुंडद्वयं प्रकृतिप्राप्तेषु शतपंचाशत्पंचविंशतिहस्तमंडपेषु मध्यमनवमांशे कार्यं । तस्यैव " मध्यमे नवमांशे तु कुंडं कुर्याद्विचक्षण " इति प्रकृतौ वचनेनात्रापि तथा प्राप्तेः । तच्च कुंड-द्वयं षड्हस्तं " दशलक्षमिते होमे षट्करं संप्रचक्षते " इति भविष्यत्पुराणात् । पंचहस्तं वा " कुंडं पंचकरं प्रोक्तं दशलक्षाहुतौ क्रमादिति " तंत्रांतराच्च । दशलक्षोत्तरमेकोनद्विपर्यंतं पंचषट्करे इत्यर्थः । अयुतहोमतः प्राप्तं एकहस्तत्वं प्राकृतं परिमाणं त्वदृष्टार्थत्वापत्याऽप्राकृत- ३० कार्यत्वाद्बाध्यते । अर्थात्परिमाणमिति कात्यायनोक्तेश्च । तत्र पंचविंशतिहस्ते मंडपे

१ खअरयफध–तदा तु, क्षकडन–तदातु ञ–तदतु । २ रनञक–सर्वं । ३ क्षरधफन–वित्त । ४ ध–दक्षये विप्रान्, इ–ततस्त्वभ्यर्चयेत् । ५ ढ–नंदन । ६ यडकदअइ–सहस्र । ७ फक्षरवधर-डयअफइर–होमत्वावांतर । ८ ञकडनअधरखसफ–र । ९ अधखञ–सधर्मकस्य, दय–अधर्मकस्य । १० ञ–तत्वा, रक्षइयअदड–एकहस्तत्वमयुतहोमीय प्राकृतं ।

मध्यनवांशे दक्षिणोत्तरयोः कुंडद्वयं निविशते कथंचित् प्रकृतितो द्वादशांगुलमेखलामात्रैः । इतरयोस्तु मंडपयोः सुगम एव निवेशः । एवं दशमुखेऽपि प्राकृतैकहस्तत्वबाधेन पंचकराणि षट्कराणि वा दशकुंडानि । तेषु प्रत्येकं दशलक्षा आहुतयः । तत्र पंचविंशतिहस्ते मंडपे मध्यमांशे पूर्वादिषु चतुर्षु दिक्षु मध्ये संलग्नानि चत्वारि कुंडानि । प्राकृतमध्यमांशाधिकरणत्वस्य
५ यावत्संभवमनुग्रहस्य न्याय्यत्वात् । प्राचि नवमांशे तु प्राकृती चतुःकरा वेदी । सप्तस्वंशेषु षट् कुंडानि यः कश्चिदेकोंऽशस्तु रिक्त एव । कुंडद्वयं मध्यमांशे । अष्टस्वंशेष्वष्टावित्यपि केचित् ।

१० शतमुखेऽपि पंचविंशतिहस्ते तावन्मंडपे शतकुंडानां निवेशो बाधित एव । पंचाशद्धस्ते यद्यपि संभवति तथापि सहस्रविप्राणां सुखेन निवेशो बाधितः । अतः शतहस्त एव निवेश उच्यते, तत्र मध्यमांशे प्राग्भागे उदक्संस्थापंचानामेका पंक्तिः । तेषां च कुंडानां प्रत्येकमंतरं सार्द्ध-सप्तहस्ताः सप्तांगुलानि च । ततः प्रतीच्यामेतादृशमेवान्यत्पंक्तित्रयं कार्यम् । पंक्तीनामंतरं चाष्टौ हस्ताः । सप्तांगुलानि च । एवं विंशतिकुंडानि मध्यभागे अन्येष्वष्टसु भागेषु मध्ये द्वे द्वेऽष्टसु
१५ दिक्ष्वष्टावष्टाविति । प्रत्येकं दशदशेति ।

ननु शतकुंडेषु प्रत्येकं लक्षाहुतिप्राप्तिः । न चैव-सप्त-कोटिहोमपक्षे संभवति । " कुर्यात् कुंड-शतं दिव्यं यथोक्तं हस्तसंमितमिति " शतमुखप्रकरणे कुंडानां हस्तपरिमाणोक्तेरिति चेन्मैवं केचित् हस्तसंमितमित्यत्र हस्ताभ्यां हस्तैश्च संमितमिति विग्रहेण त्रिचतुर्हस्तताऽपि युज्यते । द्विहस्तेऽपि तु लक्षमाहुतयः संभवंत्येव । अत एव हेमाद्रौ
२० " अयुते स्वथ होतव्ये कुंडं स्याद्धस्तमात्रकं । द्विगुणं लक्षहोमे तु कोटिहोमे चतुर्गुणमिति " ॥ यद्यप्यौत्सर्गिक एकवचनांतेनैव विग्रहस्तथाप्यनुपपत्त्या द्विबहुवचनांतेनापि क्रियते । यथा " सप्त दश प्राजापत्यान् पशूनालभत " इत्यत्र चोदकप्राप्तैकपशुनिष्पन्नद्रव्यायैकात् शाबरभाष्यानुरोधेन प्रजापतिर्देवता यस्यासौ प्राजापत्यः प्राजापत्यश्च प्राजापत्यश्च प्राजापत्यश्च इति कृतेऽपि तद्धितान्तमेक-शेष एव योगो न तु ' अयं चायं चैक ' इत्येकशेषोत्तरं तद्धितं चोदकबाधापत्तेरित्युक्तं ।
२५ एवं द्वित्रिचतुर्हस्तकुंडसंपत्त्या युज्यंत एकैकस्मिन् कुंडे लक्षमाहुतय इत्याहुः । वासुचरणास्तु व्यासतुल्यपरोऽत्र पद्यं चतुर्विंशत्यंगुलानां पंचमेखलानां विंशत्यंगुलोऽवशेषः मध्यावकाशाविभूत्या एकैकहस्तेऽपि शक्या एव लक्षमाहुतयः कर्तुं । अनारभ्याम्नातपंचमेखलापक्षेण प्राकृतमेखलात्रय-बाधात्तु द्विहस्तत्वानुरोधेनेति युक्तमाहुः ।

अथैकस्मिन्कुंडे आज्यभागांतं कृत्वाऽन्यकुंडेष्वग्निप्रणयनमिति केचित् । तन्न । बार्हस्पत्य-
३० प्रायासिकदक्षिणोत्तरवेद्योरनुष्ठीयमानायामाहुत्यामाग्नेयाद्यष्टहविष्षु चैवाराज्यभागप्रयाजाद्यंगानां पृथगनुष्ठानवदाज्यभागांतं स्विष्टकृदाद्यंगानुष्ठानवदिहापि त्रिस आहुतीर्जुहोतीतिवत्संख्यया

१ ह-कुंडं निविशते । २ ग्र-भ्यु ३ ह-पूर्वादि । ४ खगघङच-चतुर्दिक्षु । ५ ङ-प्राचीन । ६ ह्य-प्रारब्ता,न-प्राहृता; ड-प्रकृत-; यङ-प्राकृत । घ-प्रकृति । ७ ह्य-इति । ८ ह्य-ता; यदङ-ट । ९ खगङ-पंचहस्ताश्चत्वार्यंगुलानि च । क-हस्ता- १० घ-दयङ-हस्तान् ११ पंचांगुलानि च; दखगघङ-अष्टांगुलानि च । १२-खघगङन-पनात्येव, घ-मर्यात्येव; दयङ-समान्येव १३ खगघक-मध्यानुरोधेन । १५ खगङ-घफयङअङ-हस्तद्विकानां । १६ अङ्ग-भग । १७ खअङप-सा । १८ ह्य-त्रिस आहुती निरर ।

मेत्रेषु कोटिसंख्याकेषु होमेषु लक्षश शतकुण्डेष्वनुष्ठीयमानेऽआज्यभागात्स्विष्टकृदाद्यङ्गानुष्ठान-
।दस्यैव न्याय्यत्वात् । किंच अप्रमादार्थेन दीक्षाकालीनेजागरणेन दीक्षोपयुक्तसंभारसंरक्षणेऽपि
ायणीयार्थसंभारसंरक्षणार्थोनिर्देशिकजागरणावृत्तिवदिहाप्यग्निसमिन्धनार्थन्माधानावृत्ति कथ
प्यवँथव । न हि आचार्यकुंडस्थेऽग्नौ समिद्धे कुडांतरस्थाना समिधन भवति । अत एवायुतहोमे
[र्लिखितंतद्ग्रहाकारकुंडपक्षे प्रधानायतनादग्निं विभज्य नवँकुंडेषु प्रणीय नवाचार्या आज्यभागांत ५
न्त्वेत्यादिना होमशेष समाप्य पूर्णाहुतीर्हुत्वेत्यतेनाज्यभागांताना स्विष्टकृदादीना चाङ्गानामावृत्ति-
लेखन प्रयोगपारिजातीय समच्युते । तदेव च कोटिहोमे चोदकात्प्राप्त प्राकृतादसंख्याबाधेन
।नवतिसंख्यामात्र विधीयते । यद्यपि प्रणयनांतरं तथापि तद्धर्मकमेव सर्वथाऽङ्गानामा
ात्तिरेव। एतावानत्र परं विशेष । शतसंख्यया कुंडेषु नवसंख्याग्रहाद्याकारा स्थलविशेषाश्च निवर्तते ।
नतोऽग्निस्थापनोत्तरमेव प्रणयन । १०

यत्तु पारिजाते मध्यकुंडात्प्रणयनमुक्त तन्न । प्रागुदगपवर्गप्रचारबाधात् । तेन तत्संरक्षणार्थं
ोक्तमुख्यकुंडादेव प्रणयन कार्य । अस्तु वा कथंचिदयुतहोमे मध्यकुंडसद्भावात्तस्य च
र्वप्रधानभूतसूर्यदेवत्यत्वात् कथंचित्तत प्रणयन । शतमुखे तु मध्ये कुंडनिवेशाभावान्न ततोऽग्नि
ाणयन मध्यस्थलसमीपवर्तिष्वेककुण्डेषु तु विनिर्गमनाविरह । सर्वाऽप्यथ कोटिहोमविचार-
स्तातचरणैर्द्वैतनिर्णये सुविवृत इति नेह विस्तर । १५

अथ प्रायो मत्स्यानुसारिणीं भट्टकृता पद्धतिमनुसृत्य मखमखप्रयोग । कर्ता प्रारम
देनात्पूर्वं सुदिने दानमयूखीयारमदुक्तप्रकाराणामन्यतमप्रकारेण प्राचीं संसाध्य तत्र
वेतस्त्युच्छ्राय मंडपनिवेशयोग्य चतुरस्र चत्वरं कृ वा पूर्वाह्णे देशकालौ स्मृत्वाऽमुककर्म कर्तुं मंडप
रिष्ये इति संकल्प्य गणेश कूर्म शेष वसुंधा द्विजांश्च संपूज्य
‘ आगच्छ सर्वकल्याणि वसुधे लोकधारिणि । उद्धृतासि वराहेण सशैलवनकानना । २०
‘ मंडप कारयाम्यत्र त्वदूर्ध्वे शुभलक्षण । ग्रहाणाऽर्घ्यं मया दत्त प्रसन्ना शुभदा भवेति ”
ासुधाया अर्घ्यं दत्वा “ स्योना पृथिवीति ” ता प्राध्यं मंडप तदुदीच्या मध्ये वा कुड वदि च
कुर्यात् । मंडपश्चायुतहोमऽष्टहस्तो दशहस्तो वा कुड हस्तमित चतुरंगुलैरुमेखला वदी मंडपोत्तर-
भागे हस्तविस्तृता वितस्त्युच्छ्रिता वप्रत्रयवती कार्या । तत्र प्रथमो वप्रऽष्टांगुलोच्छ्राय । तदुपरि-
तनौ प्रत्येक द्व्यंगुलोच्छ्रितौ । विस्तारस्तु सर्वेषामपि प्रत्येक चतुरंगुल । लक्षहोमे तु मंडपो २५
द्वादशचतुर्दश । षाडशहस्तोऽपि कुड क्षेत्रफलतश्चतुष्कर । तदेव व्यासतो द्विकर । द्वित्रिचतु
रंगुलैश्चाग्निमेखल । तन्नोपरितनी चतुरंगुलविस्तारा अधोगत द्वे अपि प्रत्येक द्व्यंगुलविस्तारे ।
कुडादीशान्या सार्द्धहस्तविस्तृता तदर्द्धोच्छ्रितेशानप्रवणा पूर्ववद्विवप्रा वदी । कोटिहोमे तु
शततदर्द्धतदर्द्धषोडशान्यतमहस्ता मंडप । कुड तु अष्टहस्त दशहस्त षोडशहस्त वा फलत ।
तच्च व्यासस्समंतात मंडपमध्ये तस्य दक्षिणपश्चिमयोर्वानिर्देश्य । वेदी च प्राच्या द्विहस्तविस्तृतेति ३०
विशेष । द्विमुखदशमुखशतमुखेषु तु निर्णयावसरे सन्निवेश उक्त । कर्ता सुदिने मासपक्षादि

१ क्षरकडन-कालीनेन फ-कालेनेन । २ क्ष प्रयणाथाच । ३ ह्य अनिवार्येव । ४ इक्ष-कुंडेऽग्नौ ।
५क्ष-त । ६ह्य-च्च । ७ ह्य-आचार्यकुंडेषु । ८क्षह्य-नवतिसंख्या इ-नवतिसंख्यायामात्र । ९ङक्ष-प्रणयना-
न्तर । १० ह्य-एतावान् विशेष । ११ ध-निर्गमनाविरह । १२ ङइ-पूर्वसुदिने । १३ ह्य-वासुकिं ।
१४ अ क ग १।२।६ १५ क्षइनङअ-हस्तमात्र, यद-हस्तमान । १६ क्षयअङन-मेखलां, ह्यधरखफ-
मेखल । १७ क्ष-चतुष्कर । १८ क्ष-परी । १९ ङक्ष-निर्यगुल । २० ह्य-कुंडान्ता ।

संकीर्त्य श्रीकामादिग्रहपीडानिवारणकामो ऽयुतहोमं वा करिष्य इति संकल्प्य । गणेश-पूजास्वस्तिवाचनमातृपूजावृद्धिश्राद्धाचार्यादिवरणानि कुर्यात् । तत्रायुतहोमे चत्वार ऋत्विजो द्वौ वा । लक्षहोमे द्वादशाष्टौ चत्वारो वा । कोटिहोमेऽष्टौ होमार्थं चत्वारो द्वारजापका इति द्वादश । अयुतलक्षकोटिहोमेषु त्रिष्वपि षोडश वा । ब्रह्माचार्यावप्येतन्मध्य एव सर्वत्र

५ वरणमंत्रास्तु

" आचार्यस्तु यथा स्वर्गे शक्रादीनां बृहस्पतिः । तथा त्वं मम यज्ञेऽस्मिन्नाचार्यो भव सुव्रत ॥

" यथा चतुर्मुखो ब्रह्मा स्वर्गलोके पितामहः । तथाऽस्मिन्मम यज्ञे त्वं ब्रह्मा भव द्विजोत्तम ॥

" अस्य यागस्य निष्पत्तौ भवंतोऽभ्यर्थिता मया । सुप्रसन्नाः प्रकुर्वंतु शांतिकं विधिपूर्वकं" ।

कोटिहोमे तु गुरुप्रार्थना

१० " त्वं मे यतः पिता माता त्वं गतिस्त्वं परायणं । त्वत्प्रसादेन विप्रर्षे सर्वं मे स्यान्मनोगतं ॥

" आपद्विमोक्षाय च मे कुरु यज्ञमनुत्तमं । कोटिहोमाख्यमतुलं शांत्यर्थं सार्वकामिकमिति "॥

ततः सर्वानाचार्यादीन्मित्रशास्त्रोक्तानामृत्विक्शास्त्रीयानां च पदार्थानामनुसमयेन मधुपर्केण संपूज्य शुक्लमाल्यांबरानुलेपनैः सपत्नीक ऋत्विक्सहितो " भद्रं कर्णेभिरिति " वेदघोषेण मंडपं प्रदक्षिणीकृत्य पश्चिमद्वारेण प्रविशेत् । तत आचार्यो

१५ " यदत्र संस्थितं भूतं स्थानमाश्रित्य सर्वदा । स्थानं त्यक्त्वा तु तत्सर्वं यत्रस्थं तत्र गच्छतु ॥

" अपक्रामंतु भूतानि पिशाचाः सर्वतो दिशं । सर्वेषामविरोधेन ब्रह्मकर्म समारभे" ॥ इति

सर्षपान्विकीर्य " शुची वो हव्येति " " एतोन्विन्द्रमिति " च तृचाभ्यां " आपो हिष्ठे " त्यादिभिश्च भुवं प्रोक्ष्य स्वस्त्ययनं तार्क्ष्यमिति ऋग्द्वयं पठेत् । ततो मंडपनैर्ऋतिभागे हस्तमितां वेदिं कृत्वा तस्यां वस्त्रं प्रसार्य तत्र सुवर्णादिशलाकया नवरेखाः प्राक्पश्चिमायता नव च

२० दक्षिणोत्तरायताः कृत्वा मध्यकोष्ठचतुष्टयमेकीकृत्य प्रतिकोणं त्रिषु पदेषु सूत्रं दद्यात् । तथा चतुर्विंशतिरर्द्धपदानि संपद्यंते । मंडलस्याग्नेयादिषु कोणेषु शंकुचतुष्टयं

"विशंतु भूतले नागा लोकपालाश्च सर्वतः । मंडपेऽत्रावतिष्ठंतु आयुर्बलकराः सदेति " मंत्रेण निखाय

" अग्निभ्योऽप्यथ सर्पेभ्यो ये चान्ये तान्समाश्रिताः । तेभ्यो बलिं प्रयच्छामि पुण्यमोदनमुत्तमं ॥

" नैर्ऋत्याधिपतिश्चैव नैर्ऋत्यां ये च राक्षसाः । बलिं तेभ्यः प्रयच्छामि सर्वे गृह्णंतु मंत्रितं ॥

२५ " ॐ नमो वायुरक्षोभ्यो ये चान्ये तान्समाश्रिताः । बलिं तेभ्यः प्रयच्छामि पुण्यमोदनमुत्तमं ॥

" रुद्रेभ्यश्चैव सर्पेभ्यो ये चान्ये तान्समाश्रिताः । बलिं तेभ्यः प्रयच्छामि गृह्णंतु सततोत्सुकाः "॥

इति मंत्रैः शंकुपार्श्वेषु यथाक्रमं प्रतिमंत्रं माषभक्तबलीन् दत्वा

" शांतिर्यशोवती कांतिर्विशाला प्राणवाहिनी सती सुमना नंदसुभद्रा इति नव प्रागायत-रेखादेवताः पूजयित्वा

१ ऋ. सं. ५।४।२४ । २ ऋ. सं. ६।२।१८ । ३ ऋ. सं. ७।१।५ । ४ क्षड्घ-तत्समाश्रिताः
५ क्षरफडनअक-मंत्रेण ।

"हिरण्या सुव्रता लक्ष्मीर्विभूतिर्विमला प्रिया। जया काला विशोका' इति नव दक्षिणोत्तरायत-रेखा देवताश्च सपूज्य मध्ये व्यस्तसमस्तव्याहृतिभिर्वास्तुपुरुषमावाह्य वास्तोष्पते प्रतीति संपूज्य बलिं च दत्वा मध्यपदचतुष्टये वास्तोर्हृदये ब्रह्माणमावाह्य पूजयित्वा " ॐ ब्रह्मणे नमः बलिं समर्पयामीति" पायसादि बलि दद्यात्। तत पूर्वपदद्वये दक्षिणस्तनेऽर्यम्ण नम । दक्षिणपद्-द्वये जठरदक्षिणभागे विवस्वते नम । पश्चिमपदद्वये जठरवामभागे मित्राय वामस्तने पृथ्वी- ५ धराय नम इत्युदकूपदद्वये । आग्नेयकोणसूत्रद्विधाकृतब्रह्मपदसलग्नपदद्वयोत्तरार्द्धद्वये दक्षिणहस्ते सावित्राय । दक्षिणार्द्धद्वये सवित्रे च । एव नैर्ऋत्यपदद्वयपूर्वार्द्धद्वय वृषणयोर्विबुधाधिपाय । तत्पश्चिमार्द्धद्वये मेंढ्रे जयंताय वायव्यपदद्वयदक्षिणार्धे वामहस्तराजयक्ष्मणे उत्तरार्धे रुद्राय ईशानपदोत्तरार्धद्वये उरसि अभ्य । दक्षिणार्द्धद्वये मुखे आपवत्साय । ततोऽन्त्यपक्तिगते ईशान पददक्षिणार्द्धे शिरसि शिखिने । तद्दक्षिणयोर्दक्षिणबाहौ सूर्याय । तद्दक्षिणयोर्दक्षिणबाहवे च १० सत्याय । तद्दक्षिणस्थार्द्धे दक्षिणकूर्परे भृशाय । तद्दक्षिणाग्नेयपदार्धे दक्षिणप्रबाहौ आकाशाय । तत्पश्चिमार्द्धे दक्षिणप्रबाहावेव वायवे । तत्पश्चिमसार्धे दक्षिणमणिबधे पूष्णे तत्पश्चिमयो-र्दक्षिणपार्श्वे वितथाय तत्पश्चिमयोर्दक्षिणपार्श्वे एव गृहक्षताय तत्पश्चिमद्वये दक्षिणोरौ यमाय । तत्पश्चिमयोर्दक्षिणजानौ गधर्वाय । तत्पश्चिमे सार्द्धे पदे दक्षिणजघाया भृगराजाय । तत्पश्चिमे नैर्ऋत्यपदार्द्धे दक्षिणस्फिचि मृगाय । तदुत्तरार्द्ध पादयो पितृभ्य । तदुत्तर सार्द्धपदे १५ वामस्फिचि दौवारिकाय । तदुत्तरयोर्वामजघायां सुग्रीवाय । तदुत्तरयोर्व मजानौ पुष्पदताय । तदुत्तरयोर्वामोरौ वरुणाय । तदुत्तरयोर्वामपार्श्वे असुराय । तदुत्तरे सार्द्धपदे वामपार्श्वे शषाय । तदुत्तरे वायव्यार्द्धे वाममणिबधे पापाय । तत्प्रागर्द्धे वामप्रबाहौ रोगाय । तत्प्राक्सार्द्धे वामप्रबाहावेव वाहवे । तत्प्राक्द्वये वामकूर्परे मुख्याय । तत्प्राक्द्वये वामबाहौ भल्लाटाय । तत्प्राकद्वये वामबाहावेव सोमाय । तत्प्राक्द्वये वामासे सर्पाय । तत्प्राक्सार्द्धे वाम- २० श्रोत्रे अदित्यै । तत्प्रागर्द्धे वामनेत्रेऽदित्यै । तत उत्तरे वास्तोष्पत इति वास्तोष्पतये । ततो मडलाद्बहिरीशानादिषु चरक्यै विदारिकायै पूतनायै पापराक्षस्यै । तत पूर्वादिषु स्कदाय अर्यम्णे जभकाय पिलिपिच्छाय । पुन पूर्वादिषु इद्रादीन् । ततो मडलादीशाने कलश सस्थाप्य तत्र वरुण 'तत्त्वायामी'त्यावाह्य पूजयेत् ।

'यथा मेरुगिरे शृग देवानामालय सदा । तथा ब्रह्मादिदेवाना मम यज्ञ स्थिरो भवेति"२५ प्रार्थयेदिति । तत उदुबरादिसमित्तिलाज्यै स्वतत्रस्थडिलेऽष्टाविंशतिरष्टौ वा प्रत्येक तत्तन्नाममत्रैर्हुत्वा 'वास्तोष्पत' इति चतुर्भिश्च हुत्वा 'ॐ वास्तोष्पतये' इति मत्रेण पच बिल्वफलानि हुत्वा स्विष्टकृदादिपूर्णाहुत्यत कुर्यात् । ततो मडलदेवताभ्य पायसबलि दत्वा 'कृणुष्व पाज' इति सूक्तादिना मडपं त्रिसूत्र्या वेष्टयित्वा वास्तुकलशेन यजमानमभिषिच्य पुन सपूज्य यथाशक्ति दक्षिणां दत्वा ब्राह्मणान् भोजयेदिति । शारदातिलके तु होमो नोक्त । ३० तिलाज्यादिद्रव्याणां विकल्प इति भर्थातरे । इति वास्तुपूजा ।

मात्स्ये " उपोषितास्तत सर्वे कुर्वेवमधिवासनमिति "। पाद्मे "उपवासी भवेद्वमशक्तो

१ ह—मध्ये, इभवक—पदचतुष्टये । २ हाइ—द्विधाकृत पदद्वयोत्तरार्धे, क्ष—पद्मदलसलग्न । हरअ—पदोत्तरार्धे । ह—पद्मपद-पदोत्तरार्ध । ३ ऋ स १।२।२५ । ४ ऋ स ५।४।२१ । ५ ऋ स ३।४।२३ ।

नक्रमिष्यत" इति । "सद्योधिवासनं चाथ कुर्याद्यो विकलो नर" इति तत्रैवोक्तं । आधिवासनं चैवं ।
तत्र **द्वारपूजा** । पूर्वद्वारे द्वारश्रियै नमः । ऊर्ध्वं देहल्यै । अधः वामदक्षिणस्तंभयोर्गणेशाय० स्कंदाय
नमः । द्वारस्थितकलशद्वये गंगायै० यमुनायै० । दक्षिणद्वारे द्वारश्रियै नमः । ऊर्ध्वं देहल्यै० ।
अधस्तंभयोः पुष्पदंताय० कपर्दिने० । कलशद्वये गोदावर्यै० कृष्णायै० इति । पश्चिमे द्वारश्रियै० ।
५ ऊर्ध्वं देहल्यै० । अधस्तंभयोर्नंदिने० चंद्राय नमः । कलशद्वये रेवायै० ताप्त्यै० । उत्तरद्वारे द्वारश्रियै० ।
ऊर्ध्वं देहल्यै० । अधःस्तंभयोर्महाकालाय नमः । भृंगिणे नमः । कलशद्वये वाण्यै० वेण्यै० ।

इति द्वारपूजा ।

## अथ तोरणपूजा ।

तत्र पूर्वे बहिर्हस्तमात्रेवटतोरणमाश्वत्थं वा सुहृदनामकं सुशोभननामकं वा शंखांकितं "अग्नि-
१० मीळे" इति मंत्रेण न्यस्य संपूज्य राहुबृहस्पती तत्र न्यसेत् पूजयेच्च । तत्रैकः कलशः स्थाप्यः ।
तत्र "मही द्यौरिति" भूमार्थना । "ओषधयः समिति" यवप्रक्षेपः । "आ कलशेष्विति"
कलशनिधानं । "इमं मे गंग" इति जलपूरणं । "गंधद्वारामिति" गंधं प्रक्षिपेत् ।
"या ओषधीरिति" सर्वौषधीः । "ओषधयः समिति" यवान् । "कांडात्कांडादिति"
दूर्वाः । "अश्वत्थे व" इति पंचपल्लवान् । "स्योना पृथिवीति" पंचमृदः । "याः फलिनी"-
१५ रिति" फलं । "स हि रत्नानीति" पंचरत्नानि । "हिरण्यरूप" इति हिरण्यं । "युवा
सुवासा" इति वस्त्रादिना वेष्टयेत् । "पूर्णा दर्वीति" धान्य पूर्णपात्रमुपरि निदध्यात् । तत्र
ध्रुवावाहनं पूजनं च । ततो दक्षिणे औदुंबरं प्लाक्षं वा सुभद्रं विकटं वा चक्रांकिततोरणं 'इषे'-
त्वोर्जेत्वेति' निधाय चंदनादिना चर्चितं कृत्वा सूर्यमंगारकं च तत्र न्यसेत् । ततः पूर्ववत्कलशं
स्थापयित्वा तत्र धराभावाश्च पूजयेत् । ततः पश्चिमे प्लाक्षमौदुंबरं वा सुकर्म सुभीमं वा गदा-
२० कितं तोरणं "अग्न आयाहीति" न्यस्य संपूज्य चंदनादिचर्चितं कृत्वा शुक्रं बुधं च तत्र
न्यसेत् । ततः पूर्ववत्कलशं स्थापयित्वा तत्र वाक्पत्यावाहनपूजनादि । तत उत्तरे न्यग्रोधमाश्वत्थं
पालाशं वा सुहोत्रं सुप्रभं वा पद्मांकिततोरणं "शंनोदेवीरिति" निधाय पूजितं कृत्वा सोमं केतुं
शनिं च तत्र न्यसेत् । ततः कलशं स्थापयित्वा तत्र विघ्नेशावाहनपूजनादि । ततः पूर्वद्वारशाखा-
द्वये कलशद्वयं दध्यक्षतादियुक्तं पूर्ववत् स्थापयेत् । ऐरावतं कलशद्वये न्यस्यार्चयेत् । तत्र
२५ पूर्वस्मिन् ऋग्वेदिनावृत्विजौ द्वौ एकं वा 'शांतिसूक्तजपार्थत्वेन त्वामहं वृण' इति प्रत्येकं
"ऋग्वेदः पद्मपत्राक्षो गायत्रः सोमदैवतः । अत्रिगोत्रस्तु विप्रेंद्र ऋत्विक् त्वं मे मखे भवेति"
वृत्वा "अग्निमीळे" इति पूजयेत् ।

'एह्येहि सर्वामरसिद्धसाध्यैरभिष्टुतो वज्रधरामरेश । संवीज्यमानोऽप्सरसां गणेन रक्षाध्वरं नो भगवन्नमस्ते ।
"भो इंद्र इहागच्छ इह तिष्ठेति" इंद्रं सांगं सपरिवारं सायुधं सशक्तिकं द्वार-
३० कलशे आवाह्य "त्रातारमिंद्रमिति" पूजयित्वा "आशुः शिशान" इति पीतां पताकां पीतं
ध्वजं चोच्छ्रयेत् । तत ऐरावतस्थं पीतवर्णं सहस्राक्षं दक्षिणवामहस्तस्थवज्रोत्पलमिंद्रं ध्यात्वा

---

१ द्वा-दा । २ ग्रक्ष-पाठः अपरपुस्तकेषु-'उत्तरे' इति । ३ ऋ.सं. १।१।१ । ४ ऋ. सं. १।२।६ ।
५ ऋ. सं. ८।५।११ । ६ ऋ. सं. ६।८।७ । ७ ऋ. सं. ८।३।६ । ८ ऋ. सं. ८।५।८ । ९ ऋ. सं.
८।५।८ । १० ऋ. सं. १।२।६ । ११ ऋ. सं. ८।५।१० । १२ ऋ.सं. ४।७।२५ । १३ ऋ.सं. २।७।२३ ।
१४ ऋ. सं. ३।१।१३ । १५ क्ष-पूर्णपात्र । १६ तै० सं. १।१।१ । १७ ग्रावक्ष-चंदनादिः न-चंदना ।
१८ ऋ. सं. ४।५।३२ । १९ ऋ. सं. ७।६।५ । २० ऋ. सं. ४।७।३२ । २१ ८।५।२२ ।

"इंद्र॰ सुरपति श्रेष्ठो वज्रहस्तो महाबलः । शतयज्ञाधिपो देवस्तस्मै नित्य नमो नम ॥"
इति नत्वा इन्द्राय साङ्गाय सपरिवाराय सायुधाय सशक्तिकायैत माषभक्तबलि समर्पयामीति
बलि दद्यात् । तत आचम्याग्नेयकोणे पूर्ववत्कलश स्थापयित्वा तत्र पुडरीकममृत च सपूज्य

"एह्येहि सर्वामर हव्यवाह मुनिप्रवर्य्यैरभितोऽभिजुष्ट ।
तेजोवता लोकगणेन सार्द्धं ममाध्वर पाहि कवे नमस्त ॥　　५

"भो अग्ने इहागच्छेह तिष्ठेति" साङ्गादिकमग्नि कलशे आवाह्य "त्वन्नो अग्ने"त्यग्नि सपूज्याग्नि
-दूतमिति रक्ता पताका रक्त ध्वज चोच्छ्रयेत् । तत छागस्थ रक्त दक्षिणवामकरधृतशक्ति-
कमडलु यज्ञोपवीतिनमग्निं ध्यात्वा

"आग्नेय पुरुषो रक्त सर्वदेवमयोऽव्यय । धूमकेतुरजोऽध्यक्षस्तस्मै नित्य नमो नम "
इति नत्वा "अग्नये साङ्गाय एत माषभक्तबलिं समर्पयामीति " बलि दद्यात् । तत कृताचमनो　१०
दक्षिणे गत्वा प्रतिद्वारशाख पूर्ववत्कलशद्वय स्थापयित्वा वामन दिग्गज तत्रार्चयेत् ।
ततो यजुर्वेदिनौ द्वावेक वा दक्षिणद्वारे शातिसूक्तजपार्थत्वेन त्वामह वृण इत्युक्त्वा

'कातराक्षो यजुर्वेदस्त्रेष्टुभो विष्णुदैवत ।काश्यपेयस्तु विप्रेंद्र आत्विक त्व मे मखे भ ति॥"
प्रत्येक सप्रार्थ्यपेत्योर्जेत्वेति पूजयेत् । तत॰

"एह्येहि वैवस्वत धर्मराज सर्वामरैरर्चितधर्ममूर्ते ।　　१५
शुभाशुभानदशुचामधीश शिवाय न पाहि मख नमस्ते ॥

"भो यम इहागच्छेह तिष्ठेति " साङ्गादियममावाह्य "यमाये सोममिति " सपूज्य कृष्णा
पताका कृष्ण ध्वज चायगौरित्युच्छ्रयेत् ॥

ततो महिषारूढ धृतदडपाश दक्षिणवामकरमजनपर्वततुल्यरूपमग्निसमलोचन यम ध्यात्वा
"महामहिषमारूढ दडहस्त महाबल । आवाहयामि यज्ञेऽस्मिन् पूजेय प्रतिगृह्यतामिति "　२०
नत्वा ' साङ्गाय यमायैत माषभक्तबलि समर्पयामीति ' बलि दद्यात् ।
तत आचम्य नैर्ऋत्या पूर्ववत्कलश स्थापयित्वा कुमुददिग्गज दुर्जय च सपूज्य

"एह्येहि रक्षोगणनायकस्त्व विशालवेतालपिशाचसघै ।
ममाध्वर पाहि पिशाचनाथ लोकेश्वरस्त्व भगवन्नमस्ते ॥

"भो निर्ऋते इहागच्छेह तिष्ठेति" साङ्गमावाह्यासुन्वतामिति सपूज्य नीला पताका ध्वज च　२५
मोषुणे इत्युच्छ्रित्य नरारूढ खड्गहस्त नीलवर्णं महाबल महाकाय बहुराक्षससयुत निर्ऋति ध्यात्वा

"निर्ऋति खड्गहस्त च सर्वलोकैकपावन । आवाहयामि यज्ञेऽस्मिन् पूजय प्रतिगृह्यतामिति "
नत्वा साङ्गाय निर्ऋतये एत माषभक्तबलिं समर्पयामीति बलि दद्यात् ।

तत आचम्य पश्चिमे प्रतिद्वारशाख कलशद्वय निधायाजनदिग्गज तस्य चैयेत् । तत
सामगावृत्विजावृत्विज वा वृत्वा　　३०

"सामवेदस्तु पिङ्गाक्षजागत शक्रदैवत । भारद्वाजस्तु विप्रेंद्र शांतिराउ मखे कुर्विति
प्रार्थ्य प्र आयाहीति पूजयित्वा तत

---

१ ऋ स १।११२२ । २ ज्ञान—साग दि यद्दद्—साङ्गादिक । ३ ऋ स ७।६।१६ ४ ऋ स ८। ।६०। 
५ ऋ स २।८।१९ । ६ ऋ स १।३।१६ । ७।७।२२ ।

" एह्येहि यादोगणवारिधीनां गणेन पर्जन्यसहाप्सरोभिः ।
विद्याधरेंद्रामरगीयमान पाहि त्वमस्मान् भगवन्नमस्ते ॥ "

" इत्युक्त्वा भो वरुणेहागच्छेह तिष्ठेति " सांगं वरुणमावाह्य तत्त्वायामीति संपूज्य श्वेतां पताकां ध्वजं चेमं मे वरुणेत्युच्छ्रित्य मकरस्थं पाशहस्तं किरीटिनं श्वेतवर्णं वरुणं ध्यात्वा

५ "पाशहस्तं च वरुणमर्णसां पतिमीश्वरं । आवाहयामि यज्ञेऽस्मिन् वरुणाय नमोनमः" ॥
इति नत्वा सांगाय वरुणायैतं माषभक्तबलिं समर्पयामीति बलिं दद्यात् । ततोऽप उपस्पृश्य वायव्यां पूर्ववत्कलशं स्थापयित्वा पुष्पदंतं सिद्धार्थं च तत्र पूजयित्वा

" एह्येहि यज्ञे मम रक्षणाय मृगाधिरूढः सह सिद्धसंघैः ।
प्राणाधिपः कालकवेः सहाय गृहाण पूजां भगवन्नमस्ते " ॥

१० " भो वायो इहागच्छेह तिष्ठेति " सांगं वायुमावाह्य तव वायवृतस्पत इति संपूज्य वीयोहतामीति धूम्रां पताकां ध्वजं चोच्छ्रित्य मृगारूढं चित्रांबरधरं युवानं वरध्वजधरं दक्षिणवामहस्तं वायु ध्यात्वा

" वायुमाकाशगं चैव पवनं वेगवद्गतिं । आवाहयामि यज्ञेऽस्मिन् पूजेयं प्रतिगृह्यतां ॥
" अनाकारो महौजाश्च यश्चादृष्टगतिर्दिवि । तस्मै पूज्याय जगतो वायवेऽहं नमामि ते"॥

१५ इति नत्वा सांगाय वायवे एतं माषभक्तबलिं समर्पयामीति बलिं दद्यात् ।
तत आचम्योत्तरे प्रतिद्वारशालं कलशद्वय स्थापयित्वा सार्वभौमं दिग्गजं न्यस्य पूजयित्वाऽथर्वविद्वृत्विजावुत्तरद्वारे शांतिसूक्तजपार्थत्वेनाहं वृण इत्युक्त्वा

"बृहस्पतेऽथर्ववेदोऽनुष्टुभो रुद्रदैवतः । वैशंपायन विप्रेंद्र शांतिपाठं मखे कुर्विति" ॥ प्रार्थ्य
" शन्नोदेवीरिति " पूजयेत् ।

२० " एह्येहि यज्ञेश्वर यज्ञरक्षां विधत्स्व नक्षत्रगणेन सार्द्धं ।
सर्वौषधीभिः पितृभिः सहैव गृहाण पूजां भगवन्नमस्ते " ॥

' भो सोम इहागच्छेह तिष्ठेति ' सांगं सोममावाह्य वयं सोमेति संपूज्य हरितां पताकां ध्वजं चाप्यायस्वेति न्यस्य नरयुतं पुष्पकविमानस्थं कुडलहारकेयूरसंशोभितं वरदगदाधरदक्षिणवामहस्तं मुकुटिनं महोदरं स्थूलकायं ह्रस्वं पिंगलनेत्रं पीतविग्रहं शिवसखायं कुबेरं ध्यात्वा

२५ " सर्वनक्षत्रमध्ये तु सोमो राजा व्यवस्थितः । तस्मै सोमाय देवाय नक्षत्रपतये नमः ॥ "
इति नत्वा " सांगाय सोमायैतं माषभक्तबलिं समर्पयामीति" बलिं दद्यात् ।

तत ईशान्यां गत्वाऽऽचम्य पूर्ववत्कलशं स्थापयित्वा सुप्रतीकनामानं दिग्गजं मंगलं च तत्र पूजयित्वा
"एह्येहि विश्वेश्वर नस्त्रिशूलकपालखट्वांगधरेण सार्द्धं । लोकेन यज्ञेश्वर यज्ञसिद्ध्यै गृहाणपूजां भगवन्नमस्ते॥

" ईशानेहागच्छेह तिष्ठेति " तमावाह्य " तमीशानमिति " संपूज्य श्वेतां

३० सर्ववर्णां वा पताकां ध्वजं चाभित्वा देवसवितारित्युच्छ्रित्य वृषारूढं वरदत्रिशूलयुतदक्षिणवामहस्तद्वयं त्रिनेत्रं स्फटिकवर्णमीशानं ध्यात्वा

---

१ ऋ. सं. १।२।१५ । २ ऋ. सं. १।२।१६ । ३ ऋ. सं. ६।२।३० । ४ ऋ. सं. १।७।२४ ।
५ ऋ. सं. ७।६।१५ । ६ ऋ. सं. ८।१।१६ । ७ ऋ. सं. १।६।२२ । ८ ह्रा-नरयुग । ९ ह्रा-सोमं ।
१० ऋ. सं. १।६।१५ । ११ ऋ. सं. १।८।१३ ।

"वृषस्कंधसमारूढं शूलहस्तं त्रिलोचनं आवाहयामि यज्ञेऽस्मिन् पूजेयं प्रतिगृह्यतां ॥"
"सर्वाधिपो महादेव ईशानः शुक्र ईश्वरः । शूलपाणिर्विरूपाक्षस्तस्मै नित्यं नमोनमः" इति नत्वा सांगायेशानायैतं माषभक्तबलिं समर्पयामीति बलिं दद्यात् ।
तत आचम्येशानपूर्वयोर्मध्ये गत्वा
"एह्येहि पातालधरामरेंद्र नागांगनाकिंनरगीयमान । यक्षोरगेंद्रामरलोकसंघैरनंत रक्षाध्वरमस्मदीयं॥५
"भो अनंत इहागच्छेह तिष्ठेति" सांगमनंतमावाह्यायंगौरिति संपूज्य मेघवर्णां श्वेतां वा [1]पताकां ध्वजं चायंगौरित्युच्चिर्य अनंतं शयनासीनं फणसप्तकमंडितं पद्मशंखधरोर्ध्वाधोदक्षिण-करद्वयं चक्रगदाधरोर्ध्वाधोवामकरद्वयं नीलवर्णमनंतं ध्यात्वा
"योऽसावनंतरूपेण ब्रह्मांडं सचराचरं । पुष्पवद्धारयेन्मूर्ध्नि तस्मै नित्यं नमो नमः"॥ इति नत्वा [2]सांगायानंतायैतं माषभक्तबलिं समर्पयामीति'बलिं दद्यात् । तत आचम्य नैर्ऋत्यपश्चिमयोर्मध्ये गत्वा१०
"एह्येहि सर्वाधिपते सुरेंद्र लोकेन सार्द्धं पितृदेवताभिः ।
सर्वस्य धातास्यमितप्रभावो विशाध्वरं नः सततं शिवाय ।"
'भो ब्रह्मन्निहागच्छेह तिष्ठेति' ब्रह्माणमावाह्य "ब्रह्मजज्ञानमिति" संपूज्य रक्तां पताकां ध्वजं च
"ब्रह्मजज्ञानीमित्युच्चिर्य चतुर्मुखं हंसारूढमक्षमालाकुशमुष्टिधरोर्ध्वाधो दक्षिणकरद्वयं स्रुवकमंडलुधरोर्ध्वाधो वामकरद्वयं श्मश्रुलं जटिलं लंबोदरं रक्तवर्णं ब्रह्माणं ध्यात्वा　　१५
"पद्मयोनिश्चतुर्मूर्तिर्वेदावासः पितामहः । यज्ञाध्यक्षश्चतुर्वक्त्रस्तस्मै नित्यं नमोनमः॥"
इति नत्वा सांगाय ब्रह्मणे एनं माषभक्तबलिं समर्पयामीति बलिं दद्यात् ।
नैर्ऋत्यपश्चिमांतरालेऽनंतबलिदानमीशानपूर्वांतराले ब्रह्मबलिदानं चेति रूपनारायणः ।

तत आचम्य मंडपमध्येऽत्युच्चदंडो दशहस्तदीर्घस्त्रिहस्तविस्तृतः पंचहस्त दीर्घो हस्त विस्तारो [3]वा महाध्वजः किंकिण्यादियुक्त इंद्रायै वृष्णं इति स्थाप्यः। तत्रैव ब्रह्मपूजनं च। ततो मंडपषोडश-　२०
स्तंभेषु सर्वेभ्यो देवेभ्यो नमः । वंशेषु किन्नरेभ्यो नमः । पृष्ठे पन्नगेभ्यो नम इत्यर्चयेत् । ततः पूर्वभागे उपलिप्तभूमावुपविश्य
"त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च । ब्रह्मविष्णुशिवैः सार्द्धं रक्षां कुर्वंतु तानि मे ॥
"देवदानवगंधर्वा यक्षराक्षसपन्नगाः । ऋषयो मुनयो गावो देवमातर एव च ॥
"सर्वे ममाध्वरे रक्षां प्रकुर्वंतु मुदान्विताः ।　　२५
"ब्रह्मा विष्णुश्च रुद्रश्च क्षेत्रपालगणैः सह । रक्षंतु मंडपं सर्वे घ्नंतु रक्षांसि सर्वतः ॥" इति पठित्वा त्रैलोक्यस्थेभ्यः स्थावरेभ्यो भूतेभ्यो नमस्त्रैलोक्यस्थेभ्यश्चरेभ्यो भूतेभ्यो नमः । ब्रह्मणे विष्णवे शिवाय देवेभ्यो दानवेभ्यो गंधर्वेभ्यो राक्षसेभ्यः पन्नगेभ्य ऋषिभ्यो मनुष्येभ्यो गोभ्यो देवमातृभ्यो नम इति प्रत्येकं संपूज्य भूमौ माषभक्तबलिं दद्यात् ।

ततो यजमानः सर्वैर्ऋत्विग्भिः सह प्राग्द्वारेण मंडपं प्रविश्य दक्षिणद्वारपश्चिमदेशे उप-　३०
विश्य गुर्वादयो यथाविहितं कर्म कुरुध्वमिति वदेत् । प्रतिकुंडमेकैकः कलश ऋत्विग्भिः स्थाप्य इति केचित् । गुरुणा स्थाप्य इत्यन्ये। ततो ऋग्वेदादिक्रमात्प्रागादिकुंडेषु ऋत्विजोऽग्निं स्थापयेयुः।

---

१ ऋ. सं. ८।८।४७ । २ डइक्षनदय—अनंतशयनासीनं । ३ ह—नैर्ऋत । ४ ह—पंचहस्त विस्तारे । ५ ऋ. सं. ८।५।२३; ह—इंद्रस्यवृष्ण । ६ हकअ—मनवो; क्षघरर मानवो ।

ततः गुरुयजमानान्विताः ग्रहत्वर्या सर्वतोभद्रमण्डलदेवताः स्थापयेदिति पितामहचरणाः ।
यथा । अद्येत्यादिमण्डलदेवतास्थापनं करिष्य इति संकल्प्य स्थापयेत् । तत्र मध्ये ब्रह्माणं ।
ब्रह्मजज्ञानं गौतमो वामदेवो ब्रह्मा त्रिष्टुप् स्थापने पूजने च विनियोगः । एवमुत्तरत्र ।
ॐ ब्रह्मजज्ञानं । ततः उदीचीमारभ्य वायव्यपर्यंतं कुबेरादीन्वाध्वतानष्टौ लोकपालान्
५ तत्राप्यायस्व गौतमः सोमो गायत्री । ॐ आप्यायस्व २ अभित्वाऽजीगर्त्ते शुनःशेप ईशानो
गायत्री । ॐ अभित्वा देवसवितः ३ । इन्द्र यो मधुछंदा इन्द्रो गायत्री । ॐ इंद्र वोएभ्यतः ४ ।
अग्नि काण्वो मेधातिथिरग्निर्गायत्री । ॐ अग्निं दूतं वृणीमहे ५ । यमाय सोमं यमो यमोऽनुष्टुप् ।
ॐ यमाय सोमं ॥ ६ ॥ मापुणो घोरः कण्वो निर्ऋतिर्गायत्री । ॐ मोर्षुण ॥ ७ ॥ तत्वायामि
शुनःशेपो वरुणस्त्रिष्टुप् । ॐ तत्वायामि ॥ ८ ॥ वायोशतं गौतमो वामदेवो वायुरनुष्टुप् । ॐ वायो
१० शतं ॥ ९ ॥ वायुसोममध्येऽष्टौ वसून् ज्मया अत्र मैत्रावरुणो वसिष्ठो वसवस्त्रिष्टुप् । ॐ ज्मया
अत्र ॥ १० ॥ सोमेशानमध्ये एकादशरुद्रान् । आरुद्रास श्यावाश्व एकादशरुद्रा जगती ॐ
आरुद्रास ॥ ११ ॥ ईशानेन्द्रमध्ये द्वादशादित्यान् । त्याञ्च सामदो मत्स्यो द्वादशादित्या गायत्री ।
ॐ त्यान्नु क्षत्रियान् ॥ १२ ॥ इन्द्राग्निमध्येऽश्विनौ राहूगणो गौतमोऽश्विनावुष्णिक् । ॐ अश्वि-
नावर्ति ॥ १३ ॥ अग्नियममध्ये विश्वेदेवान् सपैतृकान् । ओमासोमधुछंदा विश्वेदेवा गायत्री ॐ
१५ मास ॥ १४ ॥ यमनिर्ऋतिमध्ये सप्तयक्षान् । अभित्य देव गौतमो वामदेव सप्तयक्षा प्रकृति । अभित्य
देव सवितारमोण्यो कविक्रतुमर्चामि सत्यसव रत्नधामभिप्रिय मतिं कविं । ऊर्ध्वायस्यामतिर्भा
अदिद्युतत्सवीमनि हिरण्यपाणिरमिमीत सुक्रतु कृपास्व ॥ १५ ॥ निर्ऋतिवरुणमध्ये भूतनागान् ।
आयगौः सार्पराज्ञा सर्पा गायत्री । ॐ आयगौः ॥ १६ ॥ वरुणवायुमध्ये गन्धर्वाप्सरस ।
अप्सरसामेतशाकाश्यपभृगो गन्धर्वाप्सरसोऽनुष्टुप् । ॐ अप्सरसा गन्धर्वाणा ॥ १७ ॥ ब्रह्मसोममध्ये
२० स्कन्दनंदीश्वरशूलमहाकालान् । कुमारस्कन्दस्त्रिष्टुप् । ॐ कुमार माता० ॥ १८ ॥ ऋषभमृषभो
वैराजो ऋषभोऽनुष्टुप् । ॐ ऋषभ मा० ॥ १९ ॥ ब्रह्मेशानमध्ये दक्षादीन् सप्त । अदिति
लॉक्ये बृहस्पतिर्दक्षोऽनुष्टुप् । ॐ अदितिर्ह्यजनिष्ट० २०।२१ ब्रह्मेन्द्रमध्ये दुर्गां विष्णुं च ।
तामग्निवर्णां सौभरिर्दुर्गात्रिष्टुप् । ॐ तामग्निवर्णां० ॥ २२ ॥ इदं विष्णुः काण्वो मधातिथि
विष्णुर्गायत्री । ॐ इदं विष्णु० ॥ २३ ॥ ब्रह्माग्नियमध्ये स्वधां । उदीरतां शंख स्वधा
२५ त्रिष्टुप् । उदीरता सूनृता० ॥ २४ ॥ ब्रह्मयममध्ये मृत्युरोगान् । परंमृत्यो संकुसुको
मृत्युरोगास्त्रिष्टुप् ॥ ॐ परं मृत्यो अनु० ॥ २५ ॥ ब्रह्मनिर्ऋतिमध्ये गणपतिं । गणानां त्वा
गृत्समदो गणपतिर्जगती । " ॐ गणानां त्वा० " ॥ २६ ॥ ब्रह्मवरुणमध्ये अपः । शंनोदेवी-
रभिष्टय सिंधुद्वीप आपो गायत्री । " ॐ शन्नो देवी " ॥ २७ ॥ ब्रह्मवायुमध्ये मरुत । मरुतो

---

१ ख्रघपस्तरइय—सर्वतोभद्रे मण्डलदेवता । २ ख्र—अद्येत्यादि । ३ ऋ ॥ ११६।२२ । ४ ऋ. स १।३।१३ । ५ ख्र—छदो । ६ ऋ. स १।१।३५ । ७ ऋ. स ७।६।१६ । ८ ऋ. स १।३।१६ । ९ ऋ स १।७।१५ । १० ऋ. स ३।७।२४ । ११ ऋ स ५।४।६ । १२ ऋ. स ४।३।२१ । १३ ऋ स ६।७।५१ । १४ ऋ. स १।६।२७ । १५ ख्र—छदांसि । १६ घस्वरहण कृष्णव । १७ ख्रघअइ—निन्दति । १८ ऋ. स ८।८।४७ । १९ स—मेतन्नरा ख्र—मेतस । २० ऋ स ८।७।१४ । २१ ऋ स ३।८।१४ । २२ ऋ स ८।८।२४ ङइ—लाक्यो । २३ ऋ स ८।३।११ । २४ ऋ ॥ १।२।७ । २५ २।१।१५; रक्षकदयङ—अथर । २६ ऋ स ७।६।२६ । २७ ऋ. स ३।६।२९ । २८ अघरसयदनइकक्षड शर्नोदेवीर ।

यस्य राहुगणो गौतमो मरुतो गायत्री । " ॐ मरुतो यस्य " ॥ २८ ॥ ब्रह्मण पादमूले कर्णिकाध पृथ्वीं । स्यो ना मेधातिथिर्भूमिर्गायत्री ॥ " स्योना पृथिवि० " ॥ २९ ॥ तत्रैव गगादिनद्यः । इम मे सिंधुक्षितैर्प्रैयमेघो गगायमुनासरस्वत्यो जगती । " ॐ इम मे गगे " ॥ ३० ॥ तत्रैव सप्त सागरान् । धाम्नो धाम्नो राजन्नितो वरुण नो मुच । यदापो अघ्न्या इति वरुणेति शपामहे ततो वरुण नो मुच । मयि वापो मोषधीर्हिंसीरितोविश्वंध्यचाभस्वेतो वरुण ना मव । ५ तदुपरि मेरु नाम्नाऽऽवाह्य सोमादिसमीपे क्रमेणायुधानि गदा त्रिशूल वज्र शक्ति दड खड्ग पाश अकुश । तद्वाह्ये उत्तरादित. गौतम । भरद्वाज । विश्वामित्र । कश्यप । जमदग्नि । वसिष्ठ । अत्रि । अरुधतीं । तद्बाह्ये पूर्वादि । ऐन्द्रीं । कौमारीं । ब्राह्मीं । वाराहीं । चामुडा । वैष्णवीं । माहेश्वरीं । विनायकीमित्यष्टौ शक्ती प्रतिष्ठाप्य प्रत्येक सहावाह्य पूजयेत् । ततस्तस्यामेव वधा वस्त्रलिखित वक्ष्यमाणमंडलेष्वादित्यादिदेवता. स्थापयेत् पूजयेच्च । अस्मिन्कर्मणि ग्रहादिस्थापन पूजन १० च करिष्ये"इति संकल्प प्रणवस्य ब्रह्मा ऋषि परमात्माऽग्निर्देवता दैवी गायत्री छद व्याहृतीना क्रमेण जमदग्निर्भरद्वाजभृगव ऋषय अग्निवायुसूर्या देवता दैवी गायत्री दैवी उष्णिक् दैवी बृहत्यश्छदासि सूर्यावाहने विनियोग । केचिन्मत्रानन्यानाहन आहु । तत्र ग्रहपीठमध्ये वर्तुले प्राङ्मुख सूर्य रक्तपुष्पाक्षतै आ कृष्णेन हिरण्यस्तूप सविता त्रिष्टुप । सूर्यावाहन विनियोग । ॐ आकृष्णेन रजसा ॐ भूर्भुव स्व कलिंगदेशोद्भव काश्यपगोत्र सूर्येहागच्छत्यावाह्यह १५ तिष्ठेति स्थापयेत् । एवं सर्वत्र मत्राते व्याहृतीरुक्त्वेहागच्छेह तिष्ठेति स्थापयत । तत आग्नेये चतुरस्र प्रत्यङ्मुख सोम श्वेतपुष्पाक्षतै· आप्यायस्व गौतमः सोमो गायत्री सोमावाह० । यमुनातीरोद्भव आत्रेयगोत्र सोम ॥ २ ॥ ततो दक्षिणे त्रिकोणे दक्षिणामुख भौम रक्तपुष्पाक्षतैरग्निर्मूर्द्धाविरूपोऽगारको गायत्रीअगारकावाह० ॥ अवतीसमुद्भव भारद्वाजसगोत्र भौम० ३ । तत ईशान्ये बाणाकारे उदङ्मुख बुध पीतपुष्पाक्षतैरुद्बुध्यस्व बुध सौम्यो बुध त्रिष्टुप बुधावाहने० २० मगधदेशोद्भव आत्रेयसगोत्र बुध० ॥ ४ ॥ तत उत्तरतो दीर्घचतुरस्र उदङ्मुख बृहस्पति पीत पुष्पाक्षतैर्बृहस्पते गृत्समदो बृहस्पतिस्त्रिष्टुप । सिंधुदेशोद्भव आगिरसगोत्र बृहस्पत० ॥ ५ ॥ तत पूर्वे पचकोणे प्राङ्मुख शुक्र शुक्लपुष्पाक्षतै शुक्र पाराशर शुक्रो द्विपदाविराट् । भोजकटदेशोद्भव भार्गवसगोत्र शुक्र० ॥ ६ ॥ तत पश्चिमे धनुषि प्रत्यङ्मुख शनिं कृष्णपुष्पाक्षतै शमाग्निरिति विठि श निशाम्भिक सौराष्ट्रेज काश्यपगोत्र शनैश्चर० ॥ ७ ॥ ततो नैर्ऋत्य शूर्पा- २५ कारे दक्षिणामुख राहु कृष्णपुष्पाक्षतै कया नो वामदेवो राहुर्गायत्रीराहावाह० ॥ राठिनापुरोद्भव पैठीनासिसगोत्र राहो० ॥ ८ ॥ ततो वायव्ये ध्वजाकारे दक्षिणामुख केतु धूम्रपुष्पाक्षतै केतु मधुछदा केतवो गायत्री० अतर्वेदिसमुद्भव जैमिनिसगोत्र केतो इहागच्छेह तिष्ठेति ॥ ९ ॥

---

१ ऋ स १।६।११ । २ ऋ स १।२।६ । ३ छ-क्षिन । ४ ऋ स ८।,१६। ५ अडनइकदख यो । ६ छ-सि । ७ छ-मच्यवा । ८ छ-नाम । वाह्य, अरदय-वह्य म-नाम्नावाह्य । ९ घ-अष्टा शक्ती दयइ-अष्टौ शक्ता दअकमहाक्षखर-शक्तय । १० छ-सहवाह्य यदद-आवाह्य । ११ अक नडक्ष-पठ । १२ यदइ-मे नक्षअ-के । १३ ढघक्ष-वर्तुल । १४ छ रक्ताक्षतै । १५ ऋ स १।३।६ । १६ छ-भारद्वाजगोत्र । १७ घ पारशर डक्ष पराशर । १८ क्षडदय-सौराष्ट्रदेशोद्भव । १९ छड-नैऋत्ये । छ-वा त्रा केतवा इहागच्छ—

सर्वे वा आदित्याभिमुखा. । अथाधिदेवता श्वेतपुष्पाक्षतैः क्रमात्सूर्यादीनां दक्षिणत स्थाप्याः ।
त्र्यंबक वसिष्ठो रुद्रोऽनुष्टुप् विनियोग सर्वत्र ज्ञेयः । ॐ त्र्यंबकं ॐ भूर्भुव [illegible] ईश्वरं ॥ १ ॥
गौरीर्मिमाय दीर्घतमा उमा जगती । सोमदक्षिणे उमा० ॥ २ ॥ यद्रुद्रो दीर्घतमारुद्रस्त्रि-
ष्टुप् रुद्रः ॥ ३ ॥ विष्णोर्नुकं विष्णोर्दीर्घतमाविष्णुस्त्रिष्टुप् विष्णो ॥ ४ ॥ ब्रह्मजज्ञान गौतमो
५ वामदेवो ब्रह्मा त्रिष्टुप् ब्रह्मजे० ॥ ५ ॥ इंद्र वो मधुछंदा इंद्रो गायत्री इंद्र वो० ॥ ६ ॥ यमाय
सोम यमोऽनुष्टुप् यमाय० ॥ ७ ॥ मोषुणो घोर. कण्वः कालो गायत्री । मोषुणः परा० ॥ ८ ॥
उषो वाज प्रस्कण्वश्चित्रगुप्तो बृहती । उषो वाज० ॥ ९ ॥ एवमेव शुक्लपुष्पाक्षतैर्महागणा
वामे मन्त्रान्ते व्याहृतीरिहागच्छेह तिष्ठेति चोक्त्वा प्रत्यधिदेवताः स्थापयेत् । अग्निं
काण्वो मधोतिथिरग्निर्गायत्री । ॐ अग्निं दूत ॥ १ ॥ अप्सु मे मेधातिथिरापोऽनुष्टुप्
१० ॥ २ ॥ स्योना मेधातिथिर्भूमिर्गायत्री ३ इदं विष्णुर्मेधातिथिर्विष्णुर्गायत्री ॥ ४ ॥
इंद्र श्रेष्ठानि गृत्समद इंद्रस्त्रिष्टुप् ॥ ५ ॥ इंद्राणी वृषाकपिरिंद्राणी पंक्तिः ॥ ६ ॥
प्रजापतेर्हिरण्यगर्भ प्रजापतिस्त्रिष्टुप् ॥ ७ ॥ आयंगौ सार्पराज्ञी सर्पा गायत्री ॥ ८ ॥
ब्रह्म जज्ञान गौतमो वामदेवो ब्रह्मात्रिष्टुप् ॥ ९ ॥ तत शुक्लपुष्पाक्षतैर्विनायकादीन्
पंच गणानां त्वा गृत्समदो गणपतिर्जगती । राहोरुत्तरतो विनायक । जातवेदसे कश्यपो
१५ दुर्गा त्रिष्टुप् । शनेरुत्तरतो दुर्गा ॥ २ ॥ तव वायवृतस्पते व्यश्व आंगिरसो वायुर्गायत्री ।
रवेरुत्तरतो वायु । एतान्मन्त्रान्पठति साम्प्रदायिका । तत्र केषुचिन्मन्त्रेषु मूल चिन्त्य ॥ ३ ॥
आदित्प्रत्नस्य व स आकाशो गायत्री । राहोर्दक्षिणे आकाश ॥ ४ ॥ एषो उषा प्रस्कण्वोऽश्विनौ
गायत्री । अश्विनाविहागच्छतमिह तिष्ठतामिति केतोर्दक्षिणेऽश्विनौ ॥ ५ ॥ एतानि विनायकादि-
स्थानानि चिंतामणौ । विनायकादीन् पंच उत्तरत एवेति सम्प्रदाय ॥ एवं द्वात्रिंशदेव देवता
२० इति रूपनारायणादय । हेमाद्रौ तु लोकपालादीनामपि सूर्याभिमुखानां त्रिषु स्थापनमुक्त ।
तद्यथा । इंद्र विश्वाजेता माधुच्छंदस इंद्रोऽनुष्टुप् । इंद्र इहागच्छेह तिष्ठेति पूर्वे इंद्रं । एवमुत्तरत्र ॥ १ ॥
अग्निं मेधातिथिरग्निर्गायत्री ॥ २ ॥ यमाय सोम यमोयमोऽनुष्टुप् ॥ ३ ॥ मोषुणो घोर कण्वो
निर्ऋतिर्गायत्री ॥ ४ ॥ त्वनो अग्ने वामदेवो वरुणस्त्रिष्टुप् ॥ ५ ॥ तव वायो व्यश्वो वायुर्गायत्री ॥ ६ ॥
सोमो धेनु गौतम सोमस्त्रिष्टुप् ॥ ७ ॥ तमीशान गौतम ईशानो जगती ॥ ८ ॥ सहस्रशीर्षा
२५ नारायणोऽनंतोऽनुष्टुप् । ईशानपूर्वयोर्मध्येऽनंत ॥ ९ ॥ ॐ ब्रह्मजज्ञान गौतमो वामदेवो ब्रह्मा
त्रिष्टुप् । नैर्ऋत्यपश्चिमयोर्मध्ये ब्रह्माण ॥ १० ॥ तत उत्तरे क्षेत्रस्य वामदेव क्षेत्रपालोऽनुष्टुप् ।
वास्तोष्पते वसिष्ठो वास्तोष्पतिस्त्रिष्टुप् । ततो लक्षहोमश्चेदिंद्रं मित्रमित्यनेन ।

" साध्यवन्निशरीरस्त्वं वाहन परमेष्ठिन । विषपापहरो नित्यमत शांति प्रयच्छ मे ॥ "

इत्यनेन चोत्तरे गरुत्मंतमावाह्य रवे पूर्व शेष सोमस्याग्रे वासुकिं भौमाग्रे तक्षक बुधोत्तरे कर्को-

---

१ घ—+रुद्रावाहन विनियोगे सर्वत्र दोष, ङ्य—+त्र्यंबका वा सर्वत्र ज्ञेय । २ क्ष पाठ । ङ—यद्रुद्र
३ ङक्ष—पाठ । ४ क्ष पाठ, ङ—कालाय । ५ ङफ—त्रिष्टुप् । ६ ङ+छंद । ७ ङ—ता ।
८ फङर— त्रिंशद्देवता ' कप—त्रिंशद्देवता ब्रह्म— ९ ङ—विष्णो । १० ङ—रा वायवमि शुन शेपो—
११ ङ्य—वामावर्धो वायुर्गायत्री । १२ ङ+चांगिरसो । १३ ऋ [illegible] ३।८।५ ।

ऽर्कं । बृहस्पतेरग्रे पद्मं शनिपश्चिमे शंसपालं राहोः पुरः कंबलं केतोः पुरः कुलिकं । पीठात्प्राच्या-
मग्निन्यादि सप्तनक्षत्राणि । विष्कुंभादि सप्तयोगान् । बवबालवकरणे । सप्तद्वीपानि ऋग्वेदं च ।
दक्षिणे पुष्यादि सप्तनक्षत्राणि । धृत्यादिसप्तयोगान् । कौलवतैतिलकरणे । सप्तसागरान् । यजुर्वेदं
च । पश्चिमे स्वात्यादि सप्त नक्षत्राणि । वज्रादि सप्तयोगान् । गरवाणिजकरणे । सप्तपातालानि
सामवेदं च । उत्तरे । अभिजिदादि सप्तनक्षत्राणि साध्यादि षट्योगान् । विष्टिकरणं । भूरादीन् ५
सप्तलोकान् । अथर्ववेदं च । वायव्ये ध्रुवं सप्तर्षींश्च । अथ यथावकाशं गंगादिसप्तसरितः ।
सप्तकुलाचलान् । अष्टौ वसून् । द्वादशादित्यान् । एकादशरुद्रान् । एकोनपंचाशन्मरुतः । षोडश
मातृः । षडृतून् । द्वादशमासान् । द्वे अयने । पंचदश तिथीः[1] । षष्टि संवत्सरान् । सुपर्णान् ।
नागान् । सर्पान् । यक्षान् । गंधर्वान् । विद्याधरान् । अप्सरसः । रक्षांसि । भूतानि । मनुष्यानिति ।
कोटिहोमे तु वेदेः पूर्वे ब्रह्माणं । मध्ये जनार्दनं । पश्चिमे रुद्रं । उत्तरे स्कंदमित्येतानप्यावाहयेत् १०
पूजयेच्च । ततोऽ"स्मिन्कर्मणि देवतापरिग्रहार्थमन्वाधानं करिष्य" इति संकल्प्य चक्षुषी आज्येनेत्यंत-
मुक्त्वा सूर्यादीन् ग्रहान् समिदाज्यनैवेद्यशेषचरुभिरष्टसहस्राष्टशताष्टाविंशत्यष्टान्यतमसंख्ययाऽ-
धिदेवताप्रत्यधिदेवताविनायकादीन् लोकपालांश्चामुकसंख्यया एतैरेव द्रव्यैः क्षेत्रपालादींश्चामुक-
संख्यया सूर्याद्याः सर्वा देवता दशसंख्याकतिलाहुतिभिः अग्निं वायुं सूर्यं प्रजापतिं च प्रत्येकं
पंचविंशतिशतमिताभिस्तिलाहुतिभिर्यक्ष्ये[2] । लक्षहोमे पंचविंशतिसहस्रमिताभिः । कोटिहोमे १५
पंचविंशतिलक्षमिताभिरिति विशेषः । ततः शेषेण स्विष्टकृतमित्यादि यक्ष्य इत्यंतमुक्त्वा समिद्धय-
मादाय निर्वापादिक्रमेण गुडौदनादीन् नवान्यांश्च शुद्धांस्त्रयोविंशतिरिति द्वात्रिंशत् नवैव वा चरून्
श्रपयित्वा पंचभिः षोडशभिर्वोपचारैः संपूजयेत् । तत्र वस्त्राणि ग्रहवर्णानि । रविभौमयो रक्त-
चंदनं । चंद्रशुक्रयोः श्वेतचंदनं । बुधगुर्वोः कुंकुमयुतं । शनिराहुकेतूनां कृष्णागुरुं । पुष्पाणि
तत्तद्वर्णानि । धूपास्तु । सल्लकीनिर्यासं । घृताक्तवाः । रालमगुरुं सिल्हकं बिल्वयुतागुरुं गुग्गुलुं । २०
लाक्षां मक्षः क्रमाद्ग्रहाय्य्या दत्वा उद्दीप्यस्वेति सर्वेभ्यो दीपान् दत्वा गुडौदनं पायसं नीवारौदनं
क्षीरयुतषाष्टिकौदनं दध्योदनं घृतौदनं तिलमाषयुतमोदनं मांसौदनं चित्रौदनं च क्रमान्निवेदयेत् ।
अधिदेवतादिभ्यस्तु वासोगंधपुष्पाणि श्वेतानि । गुग्गुलुर्धूपः । नैवेद्यं पा-सादि यथालाभं ।
सूर्यादिद्वात्रिंशतामन्येषां च सर्वेषां पूजा पदार्थानुसमयेनैव । ततो वेदीशान्यां कलशं संस्थाप्य
तत्र वरुणमावाह्य संपूज्याभिमंत्रयेत् । तथा २५

" कलशस्य मुखे विष्णुः कंठे रुद्रः समाश्रितः । मूले तत्र स्थितो ब्रह्मा मध्ये मातृगणाः स्मृताः ॥
" कुक्षौ तु सागराः सप्त सप्तद्वीपा वसुंधरा । ऋग्वेदोऽथ यजुर्वेदः सामवेदो ह्यथर्वणः ॥
" अंगैश्च सहिताः सर्वे कलशं तु समाश्रिताः ॥
" अत्र गायत्री सावित्री शांतिः पुष्टिकरी तथा । आयांतु यजमानस्य दुरितक्षयकारकाः ।
" देवदानवसंवादे मथ्यमाने महोदधौ । उत्पन्नोऽसि तदा कुंभ विधृतो विष्णुना स्वयं ॥ ३०
" त्वत्तो ये सर्वतीर्थानि देवाः सर्वे त्वयि स्थिताः । त्वयि तिष्ठंति भूतानि त्वयि प्राणाः प्रतिष्ठिताः ॥

---

१ क्ष-कौलवतैतिलकरणे । २ इनक-हाखफरदय-तिथीन् । ३ इनअकखक्ष-पाठ- । ४ डक्ष-विंशतिशत । ५ हाखघफअ-पाठः ।

" शिवः स्वयं त्वमेवासि विष्णुस्त्वं च प्रजापतिः। आदित्या वसवो रुद्रा विश्वेदेवाः सपैतृकाः॥
" त्वयि तिष्ठंति सर्वेऽपि यतः कामफलप्रदाः॥
" त्वत्प्रसादादिमं यज्ञं कर्तुमीहे जलोद्भव। सान्निध्यं कुरु मे देव प्रसन्नो भव सर्वदेति॥"

ततः फलपुष्पमालोपशोभितं वितानं बृहस्पतिदैवतं सूर्यादिभ्य इदं न ममेत्युत्सृज्य
५ ग्रहवेद्युपरि बध्नीयात्। ततश्चर्वासादनाद्याज्यभागांते यजमानः सर्वा आवाहिताः। सूर्यादि-
देवताः अग्निवायुसूर्यप्रजापतींश्चोद्दिश्य समिदाज्यचरुतिलान् होतुमुत्सृजे न ममेति त्यजेत्।
ततो ऋत्विजः समिदाज्यनैवेद्यशेषचरून् क्रमेणावाहिताभ्यो देवताभ्योऽष्टसहस्राद्यन्यतमसंख्यया
समस्तव्याहृतिभिर्वक्ष्यमाणतत्तन्मंत्रैर्वा हुत्वा घृताक्ततिलैः ताभ्य एव देवताभ्यः प्रत्येकं दश
१० दशाहुतीर्हुत्वा सोमं राजानमिति स्विष्टकृतं हुत्वा व्यस्तसमस्तव्याहृतिभिस्तिलैरयुतं लक्षं कोटिं
वा जुहुयुः। तत्र होमे ऋग्वेदिनस्तावदावाहनोक्तानेव मंत्रान्पठंति। यजुर्वेदिनां तूच्यंते।
आकृष्णेन हिरण्यस्तूपः सविता त्रिष्टुप् सूर्यप्रीतये तिलाज्यहोमे विनियोगः। " ॐ आकृष्णेन॰
पश्यन्" स्वाहा। इदं सूर्याय॰। एवं सर्वत्र। इमं देवा वरुणः सोमो यजु॰। इमं देवानां॰
राजा॥ २॥ अग्निर्मूर्धा विरूपोऽङ्गारको गायत्री॥ ३॥ उद्बुध्यस्व परमेष्ठी बुधस्त्रिष्टुप्॥ ४॥
१५ बृहस्पते गृत्समदो बृहस्पतिस्त्रिष्टुप्॥ ५॥ अन्नात्प्रजापति अश्विसरस्वतीन्द्राः शुक्रो जगती॥ ६॥
शन्नो दध्यङाथर्वणः शनिर्गायत्री॥ ७॥ कया नो वामदेवो राहुर्गायत्री॥ ८॥
केतुं मधुच्छंदाः केतवो गायत्री॥ ९॥ अथाधिदेवतानां। त्र्यंबकं वसिष्ठो रुद्रोऽनुष्टुप्
॥ १॥ अत्र प्रणीतोदकं स्पृशेत्। श्रीश्चेत्युत्तरनारायण उमा त्रिष्टुप्॥ २॥ यदक्रंदो
भास्करजमदग्निर्दीर्घतमावेरकंदास्त्रिष्टुप्॥ ३॥ विष्णोरराटमुतथ्यो विष्णुर्यजुः। विष्णोरराट॰
२० त्वा॥ ४॥ आब्रह्मन् प्रजापतिर्ब्रह्मा यजुः। आब्रह्मन्॰ कल्पतां॥ ५॥ सजोषा विश्वामित्र
इंद्रस्त्रिष्टुप्॥ सजोषा इंद्र॥ ६॥ असि यमो भास्करजमदग्निर्दीर्घतमसो यमस्त्रिष्टुप्॥ ७॥ अत्र प्रणीतोदकं
स्पृशेत्। कार्षिरसि दध्यङ्ङाथर्वण॰ कालोऽनुष्टुप्॥ ८॥ अत्रापि प्रणीतोदकं स्पृशेत्।
चित्रावसोर्कोऽपयाश्विनगुप्तो जगती चित्रावसो॰शीय॥ ९॥

" अथ प्रत्यधिदेवतानां॥ अग्निं दूतं विरूपोऽग्निर्गायत्री॥ १॥ अश्वेतर्बृहस्पतिरापः पुर
२५ उष्णिक्॥ २॥ स्योना मेधातिथिः पृथिवी गायत्री॥ ३॥ इदं विष्णुर्मेधातिथिर्विष्णुर्गायत्री॥ ४॥
त्रातारं गार्ग्य इंद्रस्त्रिष्टुप्॥ ५॥ अदित्यै दध्यङाथर्वण इंद्राणी यजुः। आदित्यैरास्नासि॰
प्याप॰॥ ६॥ प्रजापते वरुणः प्रजापतिस्त्रिष्टुप्॥ ७॥ नमोऽस्तु देवाः सर्पानुष्टुप्॥ ८॥
ब्रह्मप्रजापतिर्ब्रह्मा त्रिष्टुप्॥ ९॥

" अथ विनायकादिपंचानां। गणानां त्वा प्रजापतिर्गणपतिर्यजुः। गणानां त्वा॰ मम
३० ॥ १॥ अंबे प्रजापतिर्दुर्गानुष्टुप्॥ २॥ वातो वा गंधर्वा वात उष्णिक् प्रमाणत। आवाहने विनियुक्ता-
नप्येतान् होमे पठंति। तत्र ग्रहाणां सप्रमाणका एव। अन्येषां तूच्यंते। आवो राजानं वामदेवो
रुद्रस्त्रिष्टुप्। आपोहिष्ठा आम्बरीष सिंधुद्वीपा उमा गायत्री। स्योना मेधातिथिः स्कंदो गायत्री। इदं
विष्णुर्मेधातिथिर्विष्णुर्गायत्री। त्वामि-सप्रथा गोतमो ब्रह्मा बृहती। इंद्रमिद्देवतातय उर्कसमिद्-

---

१ अहक–आवाहनमत्रानेव। २ डच्च–अश्विना। ३ ह–समापका एव। ४ डअख–अतो।
५ झ–इंद्रमिद्देवतातय। ६ न–सुमिद, अक–सुमिद, यद्वख–सुमिद।

त्रिष्टुप् । आयगौः सार्पराज्ञी यमो गायत्री । ब्रह्मजज्ञानं गौतमो वामदेवः कालस्त्रिष्टुप् । यद्राज्ञातं कौशिक चित्रगुप्तोऽनुष्टुप् । अग्निं दूतं काण्वो मेधातिथिरग्निर्गायत्री । उदुत्तमं गौतमो वामदेव आपस्त्रिष्टुप् । पृथिव्यंतरिक्षं विष्णुः पृथिव्युष्णिक् । सहस्रशीर्षा नारायणो विष्णुरनुष्टुप् । इंद्रायेंद्रो मरुत्वत उत्तानपर्णे सुभगे प्रजापते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् । नमो अस्तु सर्पेभ्यो देवाः सर्वानुष्टुप् । एष ब्रह्मा प्रजापतिर्ब्रह्मा द्विपदा गायत्री । आतून इंद्र क्षुमंद　५ काण्वो गणपतिर्गायत्री । जातवेदसे कश्यपो दुर्गा त्रिष्टुप् । आदिदूत्तत आकाशो गायत्री । क्षत्राणात्रितो वायुरुष्णिक् । आकाशादिभ्यस्तु स्थापनमंत्रा एव । क्षेत्रपालमुक्ष्यादिभ्यस्तु प्रणवाद्याः स्वाहांता नाममंत्रा एव । लक्षकोटिहोमयोरिंद्र मित्रमित्यनेन गरुत्मद्धोम । कोटिहोमे तु ब्रह्मजनार्दनरुद्रकंदेभ्योऽपि नाममंत्रैर्होम । ततो यजमानो मंडपप्राग्द्वारकलशसमीपे त्रातारमिंद्र गर्ग इंद्रस्त्रिष्टुप् । इंद्रप्रीत्यर्थे बलिदाने विनियोग. । त्रातारमिंद्रं इंद्राय सांगाय सपरिवाराय　१० सायुधाय सशक्तिकायामु सदीपमाषभक्तबलिं समर्पयामि नम इति सदीपमाषभक्तबलिं दत्वा भो इंद्र दिशं रक्ष बलिं भक्ष मम सकुटुंबस्यायुः कर्ता क्षेमकर्ता शुभकर्ता शांतिकर्ता पुष्टिकर्ता तुष्टिकर्ता भवेति प्रार्थयेत् । एवमाग्नेय्यादिषु होमोक्ताग्न्यादिमंत्रैर्बलिदान प्रार्थन च । एवमधिदेवताप्रत्यधिदेवतासहितेभ्यः सूर्यादिग्रहेभ्योऽपि होमोक्तैस्तत्तन्मंत्रैर्विनायकदुर्गावाय्वाकाशाश्वि-वास्तोष्पतिक्षेत्राधिपतिभ्यश्च तत्तन्मंत्रैर्होमोक्तैरेव ।　१५

ततः आचार्यो यजमानान्वारब्धः स्रुचिस्रुवेण द्वादशवारं नारिकेलादिफलयुक्ताज्यं गृहीत्वा पूर्णाहुतिं जुहुयात् । तत्र मंत्रा । समुद्रादूर्मिरिति तृचस्य गौतमो वामदेवोऽग्निस्त्रिष्टुप् । पूर्णाहुतौ विनियोगः।एवमग्रेऽपि विनियोगः। मूर्द्धानं दिवो भरद्वाजो वैश्वानरस्त्रिष्टुप् । पुनरग्निर्वसुरुद्रादित्यास्त्रिष्टुप् । पूर्णादर्विविश्वेदेवा शतक्रतुरनुष्टुप् । सप्त ते अग्ने सप्तवानग्निर्जगती । धाम ते वामदेव आपो जगती । धामं ते०स्वाहेति । यजमानस्तु इदमग्नये वैश्वानराय वसुरुद्रादित्येभ्यः　२० शतक्रतवे सप्तवते अग्नयेभ्यश्च न ममेति त्यजेत् ।

**कात्यायना** तु मूर्धानं दिव इत्येव पूर्णाहुतिमंत्र । अग्नय इदं न ममेति त्याग । **सामगाना** तु प्रजापतिऋषिर्गायत्रीछंदः इंद्रो देवता यशस्कामस्य यजमानस्य यजनीयप्रयोगे विनियोग. । पूर्णहोम यशसा जुहोमि योऽस्मै जुहोति वरमस्मै ददाति । वर वृणे यशसा भामि लोके स्वाहेत्यनेन स्रुवेणैव होमः । इंद्रायेदं न ममेति त्याग. ।　२५

ततो वसोर्द्धारया होष्यामीति संकल्प्य यजमानो वसोर्द्धारां जुहुयात् । मंत्रास्तु अग्निमीळे इति नवाना मधुच्छंदा अग्निर्गायत्री वसोर्द्धाराया विनियोग । विष्णोर्नुकमिति षण्णा दीर्घतमा विष्णुस्त्रिष्टुप् । आ ते पितरिति पंचदशाना गृत्समदो रुद्रस्त्रिष्टुप् । स्वा दिष्ठयेति नवाना मधुच्छंदः पवमानसोमो गायत्री । महावैश्वानरसाम्नो महावैश्वानरऋषिर्वैश्वानरो देवता । पथ्या-बृहतीछंदः। ज्येष्ठसाम्नो भरद्वाज ऋषिर्वैश्वानरो देवता त्रिष्टुप्छंदः। वसोर्द्धारां जुहोतीत्यनुवाकमपि　३०

१ इ-उष्णिक् । २ ह्—प्रदानं । ३ दक्ष—दिश, इयद—दिदशा । ४ इ—दि । ५ इ-एवमग्रेपि । ६ ह्—जो ।

पठंति शिष्टाः । एवं वसोर्द्धारां हुत्वा पूर्णपात्रविमोकादि च यथाशास्त्रं समाप्याचार्यसहिता ऋत्विजः सर्वौषधीभिरनुलिप्तांगं पवित्राद्यादिसहितं यजमानं स्वस्वशाखीयैर्मंत्रैर्नवग्रहपीठ-समीपस्थकलशोदकेन संपातकलशोदकेन वाऽभिषिंचेयुः । पौराणैश्च । ते च

"सुरास्त्वामभिषिंचंतु ब्रह्मविष्णुमहेश्वराः । वासुदेवो जगन्नाथस्तथा संकर्षणो विभुः ॥

५ "प्रद्युम्नश्चानिरुद्धश्च भवंतु विजयाय ते । आखंडलोऽग्निर्भगवान् यमो वै निर्ऋतिस्तथा ॥

"वरुणः पवनश्चैव धनाध्यक्षस्तथा शिवः । ब्रह्मणा सहिताः सर्वे दिक्पालाः पांतु ते सदा ॥

"कीर्तिर्लक्ष्मीर्धृतिर्मेधा पुष्टिः श्रद्धा क्रिया मतिः । बुद्धिर्लज्जा वपुः शांतिस्तुष्टिः कांतिश्च मातरः ॥

"एतास्त्वामभिषिंचंतु देवपत्न्यः समागताः ।

"आदित्यश्चंद्रमा भौमो बुधजीवसितार्कजाः । ग्रहास्त्वामभिषिंचंतु राहुः केतुश्च तर्पिताः ॥

१० "देवदानवगंधर्वा यक्षराक्षसपन्नगाः । ऋषयो मनवो गावो देवमातर एव च ॥

"देवपत्न्यो द्रुमा नागा दैत्याश्चाप्सरसो गणाः । अस्त्राणि सर्वशास्त्राणि राजानो वाहनानि च ॥

"औषधानि च रत्नानि कालस्यावयवाश्च ये । सरितः सागराः शैलास्तीर्थानि जलदा नगाः ॥

"एते त्वामभिषिंचंतु सर्वकामार्थसिद्धये" इति । तच्छंयोरावृणीमह इति ।

ततो यजमानः स्नात्वा शुक्लगंधमाल्यांबरधर आचार्यादीन्प्रणम्य संपूज्य तेभ्यो दक्षिणां १५ दद्यात् । तत्राचार्याय धेनुः । ब्रह्मणे कृष्णोऽनड्वान् । एवं सद्रस्यर्त्विग्द्वारपालादिभ्यो यथाशक्ति । तथा

धेनुः शंखस्तथानड्वान् हेम वासो हयः क्रमात् । कृष्णा गौरायसं छागं एता वै दक्षिणाः क्रमात् ॥

ग्रहानुद्दिश्य देयाः । ततः शक्त्या ब्राह्मणान् भोजयेत्संकल्पयेद्वाऽशक्तौ । ततो दीनानाथेभ्यो भूयसीं दक्षिणां दत्वा मंडपदेवतानां ग्रहपीठदेवतानां चोत्तरपूजां कृत्वा "यांतु देवगणाः" 'अभ्यारमिदद्रयो । उत्तिष्ठ ब्रह्मणस्पत' इति तां उत्थाप्य विसृज्य मंडपादीन् प्रतिमादींश्च २० सर्वान् संभारानाचार्याय प्रतिपाद्य "यस्य स्मृत्या च नामोक्त्या" "प्रमादात्कुर्वतामिति" पठित्वा कर्मेश्वरार्पणं कृत्वा विप्राशिषो गृहीत्वा तान्नमस्कृत्य सुहृद्युतो भुंजीतेति सर्वं शिवं ।

इतिश्रीभट्टशंकरात्मजनीलकंठकृते शांतिपरिभाषाप्रयोगः ।

## अथ ग्रहयोगशांतिः ।

यामले

२५ "दुर्भिक्षादिभयं चैव चतुर्ग्रहसमन्वये । महारोगभयं राष्ट्रक्षयो वृष्टिविनाशनं ॥

"पंचग्रहसमायोगे दुर्भिक्षं संकरादिकं । नृपवैरं गर्भनाशो जायते जननाशनम् ॥

"ग्रहषट्कसमायोगे मंत्रिणो मरणं भवेत् । पश्वश्वादिभयं सर्वं संकरादिजनक्षयः ॥

"पट्टराज्ञीविनाशो वा महाभयमथापि वा । सप्तग्रहसमायोगे क्षितीशमरणं ध्रुवं ॥

"जगत्प्रलयमेवापि तदा निर्मानुषं जगत् । अत ऊर्ध्वं महोत्पातनानादुःखमहाकुलं ॥

३० "सूर्यः स्याद्यतिरिक्तश्चेत्तदा योगो महाद्भुतः । विना चंद्रेण योगोऽपि जगत्प्रलयकारणं ॥

---

१ क-मानवो, दय-मानवा; ह-मुनयो । २ ह-पाठः । ३ झ-धेनु । ४ झ-हृष्यमनऽवाहन् । ५ झ-छागं । ६ ऋ. स. ६।५।१६ । ७ ऋ. सं १।३।२० । ८ क्षह-नान्; इधत्वदय-इति उत्थाप्य । ९ झ-जनक्षयो नृपवैरं गर्भनाशो जननाशनम् ।

" तद्दृक्षजातजंतूनां महारोगो महाभयं । अर्थनाशः स्थानन्नाशो मानहानिर्नृपद्विनं ॥
" वातपित्तादिसंभूतमहापीडामहद्भयं । समा योगग्रहा नृणां दोषान् कुर्वंति सर्वदा ॥
" षण्मासाभ्यंतरे वाऽपि आयुर्हानिः श्रियस्तथा । जन्माष्टद्वादशे राशौ चतुर्थे पंचमेऽपि वा ॥
" पूर्वोक्तफलमेवात्र तस्माच्छांति प्रयत्नतः । कुर्याद्दोषानुसारेण वित्तशाठ्यं न कारयेत् ॥
" तत्तद्ग्रहाकृतिं कृत्वा सौवर्णेन प्रयत्नतः । सुवर्णेन तदर्द्धेन पादेनापि कनीयसीं ॥ ५
" वित्तशाठ्यं न कर्त्तव्यं कर्त्तव्यं शक्तितो नरैः । पूर्वोक्तलक्षणेनैव ग्रहमूर्तिं च कारयेत् ॥
" ग्रहस्यैकैककलशं ग्रहयोगप्रमाणतः । कारयेत्कुंभमेकं वा निर्व्रणं सुदृढं नवं ॥
" ग्रहस्येशानदिग्भागे शुद्धदेशे समस्थले । कुंडे वा स्थंडिले वाऽपि होमं कुर्याद्विधानतः ॥
" तस्य पूर्वोत्तरे देशे पूजास्थानं प्रकल्पयेत् । चतुरस्रं हस्तमात्रं स्थंडिलं तंडुलेन तु ॥
" लिखेद्ग्रहाकृतिं तत्र स्थापयेत्प्रतिमां ततः । अधिप्रत्यधिदेवादीन् दक्षिणोत्तरतः क्षिपेत् ॥ १०
" उक्तगंधैस्तथा पुष्पैस्तत्तन्माल्यैः फलैरपि । तत्तद्ग्रहोक्तमंत्रेण पूर्वोक्तेनैव पूजयेत् ॥
" स्वस्तिवाचनपूर्वेणं आचार्यऋत्विजैः सह । ग्रहपूजादिकं कृत्वा नैवेद्यांतं समर्पयेत् ॥
" ततो होमं प्रकुर्वीत स्वगृह्योक्तविधानतः । चतुर्थ्यंतं प्रकुर्वीत कलशस्थापनं ततः ॥
" पूर्वोक्तेन विधानेन शुद्धतोयेन पूरयेत् । पंचामृतं पंचगव्यं पंचत्वक् पंचपल्लवं ॥
" तत्र मंत्रैर्विनिक्षिप्य औषधानि विनिक्षिपेत् । तत्तद्ग्रहोक्तविधिना मूलान्याहृत्य निःक्षिपेत् ॥ १५
" अखिलैर्वाऽर्णवैर्वाऽपि कलशं पूरयेद्गुरुः । तत्तद्ग्रहोक्तविविधैस्तत्तन्मंत्रैर्हुनेद्पि ॥
" सर्वाज्ये जुहुयात्पश्चात्तिलाहुतिमथाचरेत् । अथ स्विष्टकृतं हुत्वा होमशेषं समापयेत् ॥
" भद्रासनोपविष्टस्य यजमानस्य ऋत्विजैः । कलशस्योदकेनैवमभिषेकं समाचरेत् ॥
" योगग्रहोक्तमंत्रैश्च अधिप्रत्यधिमंत्रतः । नवग्रहोक्तमंत्रैश्च जातवेदादिपंचकैः ॥
" त्रियंबकेन मंत्रेण क्षेत्रस्य पतिना अपि । यत इंद्रद्वयेनैव लोकपालाष्टकैरपि ॥ २०
"सुरास्त्वा इति मंत्रेण येन देवादयः क्रमात् । अन्यैश्च पुण्यसूक्तैश्च अभिषेकं समाचरेत् ॥
" अभिषेकाप्लुत वस्त्रमाचार्याय निवेदयेत् । ततः शुक्लांबरधरः कुर्यादाज्यावलोकनं ॥
"ऋत्विग्भ्यो दक्षिणां दद्याद्धेनुं शंखादिकानपि । तदभावे यथाशक्ति हिरण्यमपि दापयेत् ॥
" ब्राह्मणान् भोजयेत्पश्चाद्यथाविभवसारतः ॥
" एवं यः कुरुते भक्त्या ग्रहदोषविवर्जितः । पूर्वोक्तसर्वदोषेभ्यश्च विमुक्तः पुत्रवान् सुखी ॥ २५
" आयुरैश्वर्यसंपन्नो जीवेद्वर्षशतं नरः । इह लोके सुखी भूत्वा पश्चाच्छिवपुरं व्रजेत् ॥ "

इति ग्रहयोगशांतिः ।

---

१ ट-ड-फ-प-श्र-विनाय । २ अतदर्द्धे फ-पुस्तके सौटितेन । ३ यह—कांबदेन, कर—नैवेद्यकने २ क्ष—ण ।

## ॥ अथ ग्रहस्नानानि ॥

विष्णुधर्मोत्तरे

" मंजिष्ठामदमातंग कुंकुमं रक्तचंदनं । पूर्णकुंभे कृतं ताम्रे सूर्यस्नानं विधीयते ॥"

मदमातंग गजमदः ।

५ " उशीरं च शिरीषं च कुंकुमं रक्तचंदनं । शंखन्यस्तमिदं स्नानं चंद्रदोषविनाशनं ॥

" खदिरं देवदारु च तिलानामलकानि च । पूर्णकुंभे कृतं रौप्ये भौमपीडाविनाशनं ॥

" नदीसंगमतोयानि तन्मृदा सहितानि च । न्यस्तानि कुंभे माहेये बुधपीडाविनाशनम् ॥"

माहेये मृन्मये ।

" औदुंबरं तथा बिल्वं वटमामलकं तथा । न्यस्तं तु कुंभे सौवर्णे जीवपीडाविनाशनं ॥

१० " गोरोचना नागमदः शतपुष्पा शतावरी । विन्यस्ता राजते कुंभे शुक्रपीडाविनाशनम् ॥

" तिलान्माषान्प्रियंगुं च गंधपुष्पं तथैव च । न्यस्तं कार्ष्णायसे कुंभे सौरिपीडाविनाशनं ॥

"गुग्गुलं हिंगुलं तालं शुभां चैव मनःशिलां । शृंगे च माहिषे न्यस्येद्राहुपीडाविनाशनं ॥"

तालं हरितालं ।

" वराहनिहतां राजन् पर्वताग्रमृदं तथा । छागक्षीरं खड्गपात्रे केतुपीडाविनाशनम् ॥"

१५ वराहनिहता वराहोत्खाता । खड्गो गंडकः । " उक्तं ग्रहस्नानमिदं सर्वपीडाविनाशनं " ॥

इति ग्रहस्नानानि ॥

## अथादित्यशांतिः ॥

भविष्ये

" आदित्यवारं हस्तेन पूर्वं गृह्य विचक्षणः । मंत्रोक्तविधिना सर्वं कुर्यात्पूजाह्निकं रवेः ॥

२० " प्रत्यर्कं सप्त नक्तानि कृत्वा भक्तिपरो नरः । ततस्तु सप्तमे प्राप्ते कुर्याद्ब्राह्मणभोजनं ॥

" भास्करं शुद्धसौवर्णं कृत्वा यत्नेन मानवः । ताम्रपात्रे स्नापयित्वा रक्तपुष्पैः प्रपूजयेत् ॥

" रक्तवस्त्रयुगच्छन्नं छत्रोपानद्युगान्वितं । घृतेन स्नापयित्वा च लड्डुकान्विनिवेद्य च ॥

" होमं घृततिलैः कुर्याद्रविनाम्ना च मंत्रवित् । समिधोऽष्टोत्तरशतमष्टाविंशतिरेव च ॥

" होतव्या मधुसर्पिर्भ्यां दध्ना चैव घृतेन च । मंत्रेणानेन विदुषे ब्राह्मणाय प्रदापयेत् ॥

२५ " आदित्य नमस्तुभ्यं सप्तसप्ते दिवाकर । त्वं रवे तारयस्वास्मानस्मात्संसारसागरात् ॥

" अनेनानेन राजेंद्र भवदारोग्यमुत्तमम् । द्रव्यसंपत्सुतप्राप्तिरिति पौराणिका विदुः ॥

" अपि सत्रादिनी चैव शांतिः पुष्टिः सदा नृणां । सूर्यपीडासु घोरासु कृता शांतिः शुभप्रदा ॥"

## अथ चंद्रशांतिस्तत्रैव

" तद्वच्चित्रासु संगृह्य सोमवारं विचक्षणः । अनेनैवोक्तविधिना कुर्यात्पूजादिकं विभो ॥

३० " सप्तमे तु ततः प्राप्ते कुर्याद्ब्राह्मणभोजनं । कांस्यपात्रेऽथ संस्थाप्य सोमं रजतसंभवम् ॥

---

१ ड—मंजिष्ठमतमातंग । २ डइफ़नद्य सौरी र—सौरा । ३ नड—वार । ४ ड—सर्वं । ५ ड—द्रव्य । ६ अ—पाठ । इतर पुस्तकेषु 'सर्पिर्भ्यां' इति पाठः ।

" श्वेतवस्त्रयुगच्छन्नं श्वेतपुष्पैः प्रपूजितम् । पादुकोपानहच्छत्रभोजनासनसंयुतं ॥
" होमं घृततिलैः कुर्यात्सोमनाम्ना च मंत्रवित् । समिधोऽष्टोत्तरशतमष्टाविंशतिरेव च ॥
" होतव्या मधुसर्पिर्भ्यां दध्ना चैव घृतेन च । दध्यन्नशिखरे कृत्वा ब्राह्मणाय निवेदयेत् ॥
" मंत्रेणानेन राजेंद्र सम्यग्भक्त्या समन्वितः ॥
" महादेव जातिवल्लीपुष्पगोक्षीरपांडुरं । सोम सौम्यो भवास्माकं सर्वदा ते नमोनमः ॥ " ५

इति चंद्रशांतिः ।

## अथ मंगलशांतिः ॥

" स्वात्यामंगारकं गृह्य क्षमायां नक्तभोजनं " । क्षमा भूः ।
" सप्तमे त्वथ संप्राप्ते हैमं ताम्रे निवेश्य वै " । रक्तवस्त्रयुगच्छन्नं कुंकुमालेपितं ॥
" निवेद्य भक्तकं सारं पुष्पधूपाक्षतादिभिः । होमं घृततिलैः कुर्यात् कुजनाम्ना च मंत्रवित् ॥१०
" *समिधोऽष्टोत्तरशतमष्टाविंशतिरेव वा । होतव्या मधुसर्पिर्भ्यां दध्ना चैव घृतेन च ॥*
" मंत्रेणानेन तं दद्यात् ब्राह्मणाय कुटुंबिने ।
" 'कुज कुप्रभवोऽपि त्वं मंगलः परिपठ्यसे । अमंगलं निहत्याशु सर्वदा यच्छ मंगलं ॥'
" एवं कृते भौमकृतं दुष्कृतं शांतिमाप्नुयात् । कर्तव्यं भौमपीडासु तस्मात्प्रयतमानसैः॥"

इति मंगलशांतिः । १५

## अथ बुधशांतिः ।

" विशाखासु बुधं गृह्य सप्त नक्तान्यथाचरेत् । बुधं हेममयं कृत्वा स्थापितं कांस्यभाजने ॥
" शुक्लवस्त्रयुगच्छन्नं शुक्लमाल्यानुलेपनं । गुडौदनोपसंहारे ब्राह्मणाय निवेदयेत् ॥
" बुध त्वं बुद्धिजननो बोधवान् सर्वदा नृणां । तत्वावबोधं कुरु मे सोमपुत्र नमोनमः । '
" होमं घृततिलैः कुर्यात् बुधनाम्ना च मंत्रवित् । समिधोऽष्टोत्तरशतमष्टाविंशतिरेव वा ॥ २०
" होतव्या मधुसर्पिर्भ्यां दध्ना चैव घृतेन च ।
" बुधशांतिरियं प्रोक्ता बुधवैकृतनाशिनी । बुधदोषेषु कर्तव्या तथा शांतिकपौष्टिके " ॥

इति बुधशांतिः ।

## अथ गुरोः शांतिः ।

" गुरुं चैवानुराधासु पूजयेद्भक्तितो नरः । पूर्वोक्तविधियोगेन सप्त नक्तान्यथाचरेत् ॥ २५
" हैमं हेममये पात्रे स्थापयित्वा बृहस्पतिं । पीतांबरयुगच्छन्नं पीतयज्ञोपवीतिनं ॥
" पादुकोपानहच्छत्रकमंडलुविभूषितं । पूजयेत्पीतकुसुमैः कुंकुमेन विलेपितं ॥
" धूपदीपादिभिर्द्रव्यैः फलैश्चंदनतंडुलैः । खंडखाद्योपहारैश्च गुरोरग्रे निवेदयेत् ॥
" 'धर्मशास्त्रार्थतत्वज्ञ ज्ञानविज्ञानपारग । विबुधार्तिहराचिंत्य देवाचार्य नमोऽस्तु ते ॥ '

---

१ दइ-पांडुर; र-पांडुर । २ द-ताम्र । ३ दक्ष—व । ४ द—ग्रह ।

" होमं घृततिलैः कुर्याद्गुरुनाम्ना च मंत्रवित् । समिधोऽष्टोत्तरशतमष्टाविंशतिरेव वा ॥
" होतव्या मधुसर्पिर्भ्यां दध्ना चैव घृतेन च । " समिधोत्राऽश्वत्थस्य ।
" एतद्व्रतं महापुण्यं सर्वपापहरं शिवम् । तुष्टिपुष्टिकरं नृणां गुरुवक्रृतनाशनं ॥
" विषमस्थे गुरौ कार्या महाशांतिरियं नृभिः ॥ "

५ इति गुरुशांतिः ।

## अथ गुरुपूजा ।

स्कांदे

" कन्याविवाहकाले तु शुद्धिर्यस्या न विद्यते । ब्राह्मणस्योपनयने यस्य स्याद्दुःस्थितोगतः ॥
दुःस्थितिं प्राप्तः ॥

१० " एभिः पूजा गुरोः कार्या विधिवद्भक्तिभावितैः । मदंतीकामपुष्पाणि पौंड्रं पालाशसर्षपाः ।
मदंती यूथिका । कामो मदनवृक्षाख्यः ॥
" गुडूची वा त्वपामार्गं विडंगं शंखिनी वचा । सहदेवी विष्णुक्रांता सर्वौषध्यः शतावरी ॥
" कुष्ठं मांसं हरिद्रे द्वे मुराशैलेयचंदनं । वचा कर्चूरमुस्तं च सर्वौषध्यः प्रकीर्तिताः ॥
" तथैवाश्वत्थभृंगा च पंचगव्यं जलं तथा । नूतनं सोदकुंभं च पीतवस्त्रसमन्वितं ॥
१५ "पंचरत्नैः समायुक्तमीशान्यां स्थापितेऽनलात् । याऽ ओषधीति मंत्रेण सर्वास्त्वस्मिन् विनिक्षिपेत् ॥
" कुंभस्योपरि भागे तु स्थापयित्वा बृहस्पतिं । सुवर्णपात्रे सौवर्णीं प्रतिमां तु युधिष्ठिर ॥
" कारयेत्तु यथाशक्त्या वित्तशाठ्यविवर्जितः ।

" पीतवस्त्रयुगच्छन्नां पीतयज्ञोपवीतिनीं । पूजयेद्गंधपुष्पाद्यैस्ततो होमं समाचरेत् ॥
" समिधोऽश्वत्थवृक्षस्य होतव्याष्टोत्तरं शतं । तिलव्रीहियवोन्मिश्रं होतव्यं च यथाक्रमं ॥
२० " बृहस्पतेति मंत्रेण ऋषि छंदः समन्वितः । मंत्रेणानेन जुहुयाद्धान्यपूर्वं च यत्नतः ॥
" ततो होमावसाने तु पूजयेच्च बृहस्पतिं । पीतगंधैस्तथा पुष्पैर्धूपदीपैश्च भक्तितः ॥
" दध्योदनं च नैवेद्यं फलतांबूलसंयुतं । मंत्रेणानेन कौंतेय समभ्यर्च्य पुनःपुनः ॥
" नमस्तेऽगिरसां नाथ वाक्पतेऽथ बृहस्पते । क्रूरग्रहैः पीडितानाममृताय नमोनमः ॥
" पूजयित्वा सुराचार्यं पश्चादर्घं निवेदयेत् ॥
२५ " गंभीरदृढरूपांग देवेज्य सुमते प्रभो । नमस्ते वाक्पते शांत गृहाणार्घ्यं बृहस्पते"॥ अर्घ्यमंत्रः।

---

१ इ–यस्मात् । २ ख–दुःस्थितोगतः । ब्स्थितः प्राप्तः । खड–दु स्थितं प्राप्तः । र–दुःस्थितागमितिः । दुःस्थित प्राप्तः । दयव–दुःस्थित गतः दुःस्थितः प्राप्तः । ( इ –दुःस्थित ) ३ ड–भावित । ४ यङ्गनल–पार्ग । ५ घदइअकनयद–त्वपामार्ग । ६ यखड–कर्चोर, दयर कर्पूर; ख–कचूर । ७ ढघ–पंचगव्यजलं । ८ ख–पूग । ९ खड–पं ।

" अर्घ्यं दत्वा सुरेशस्य जपहोमं समापयेत् ।
" मत्त्या यत्ते सुराचार्य होमपूजादि संस्कृतं । तत्त्वं गृहाण शांत्यर्थं बृहस्पते नमोनमः ॥ "

संकल्पमंत्रः

" मंत्रेणानेन संकल्प्य पश्चात्संप्रार्थयेन्नृप ।
" जीवो बृहस्पतिः सूरिराचार्यो गुरुरंगिराः । वाचस्पतिर्देवमंत्री शुभं कुर्यात्सदा मम"॥ प्रार्थनामंत्रः ५
" एवं संप्रार्थयेद्देवमाचार्यं च प्रपूजयेत् । सर्वोपचारसंयुक्तां प्रतिमां तां युधिष्ठिर ॥
" प्रणम्य च गवायुक्तामाचार्याय निवेदयेत् ।
" अथाचार्यस्तु नियतो वेदवेदांगपारगः । यजमानं सपत्नीकं शांतचित्तं जितेंद्रियं ॥
" कुंभोदकं गृहीत्वा तु मंत्रैरेतैः प्रसिंचयेत् ।
" इदमापोय मंत्रेण तामग्निमृचा तथा । या ओषधीरश्वावतीः कूष्मांडैश्चाभिषेचयेत् ॥ १०
" पश्चात्संभोजयेद्विप्रान् यथाशक्त्या युधिष्ठिर । एवं कृत्वा गुरोः पूजां सर्वान्कामानवाप्नुयात् ॥
" संक्रांतावपि कौंतेय तथा स्वभ्युदयेषु च । कुर्वन् बृहस्पतेः पूजामभीष्टं फलमाप्नुयात् ॥ "
संक्रांतौ गुरुसंक्रांतौ ।

इति गुरुपूजा ।

## अथ शुक्रशांतिर्भविष्ये १५

" शुक्रं ज्येष्ठासु संपूज्य क्षमायां नक्तभोजनं ।" क्षमा भूः । " गुरूक्तक्रममार्गेण द्विजसंतर्पणेन च ॥
" सप्तमे त्वथ संप्राप्ते रौप्यं शुक्रं तु कारयेत् । वंशपात्रे च संस्थाप्य पूजयेत्सितपंकजैः ॥
" तदभावे सितैः पुष्पैस्तांबूलैश्चंदनेन वा । अग्रे तस्य प्रदातव्यं पायसं घृतसंप्लुतं ॥
" दद्यादनेन मंत्रेण ब्राह्मणाय कुटुंबिने ।
" भार्गवो भर्गशुक्रश्च शुचिः श्रुतिविशारदः । हित्वा ग्रहकृतान्दोषानायुरारोग्यदोऽस्तु सः ॥ २०
" होमं घृततिलैः कुर्याच्छुक्रनाम्ना च मंत्रवित् । समिधोऽष्टोत्तरशतमष्टाविंशतिरेव वा ॥
" होतव्या मधुसर्पिभ्यां दध्ना चैव घृतेन च ॥ "

इति शुक्रशान्तिः ॥

## अथ प्रतिशुक्रादिशांतिः ॥

तत्रैव मात्स्ये २५

" अथातः शृणु भूपाल प्रतिशुक्रप्रशांतये ।
" यात्रारंभेऽवसाने च तथा शुक्रोदये सति । शुक्रपूजा प्रकर्तव्या तां निशामय भारत ॥
" राजते वाऽथ सौवर्णे कांस्यपात्रेऽथ वा पुनः । शुक्रपुष्पांबरयुते श्वेततंडुलपूरिते ॥
" निधाय राजतं शुक्रं शुचिमुक्ताफलान्वितं । महाश्वेतसमायुक्तं सामगाय निवेदयेत् ।
" नमस्ते सर्वलोकेश नमस्ते भृगुनंदन । देवं सर्वार्थसिद्ध्यर्थं गृहाणार्घ्यं नमोऽस्तु ते ॥ ३०
" दत्त्वैवमर्घ्यं कौंतेय प्रणिपत्य विसर्जयेत् ॥

१ धक्ष्ऽअ–क्वे ।

" एवं शुक्रोदये कुर्यांयात्रादिषु च भारत। तद्वद्वाचस्पतेः पूजां प्रवक्ष्यामि युधिष्ठिर ॥
" सौवर्णपात्रे सौवर्णममरेशगुरोर्हितं। पीतपुष्पांबरधरं कृत्वा स्नात्वाऽथ सर्षपैः ॥
" पीलाशाश्वत्थभंगेन पंचगव्यतिलेन तु "। भंगः पल्लवः।
" पीतांगरागवसनो घृतहोमं तु कारयेत्। प्रणम्य तां गवा सार्द्धं ब्राह्मणाय निवेदयेत् ॥
५ " नमस्तेऽगिरसां नाथ वाक्पते ते बृहस्पते। क्रूरग्रहैः पीडितानाममृताय नमो नमः ॥" इत्यर्घमंत्रः।
" संक्रांतावपि कौंतेय यात्रास्वभ्युदयेषु च। कुर्वन् बृहस्पतेः पूजां सर्वान्कामान्समश्नुते ॥
" अथवा मौक्तिकान्येव सुवृत्तानि बृहंति च। मार्गवांगिरसौ चिंत्य तान्येव प्रतिपादयेत् " ॥

इति प्रतिशुक्रादिशांतिः ॥

## अथ शनिराहुकेतुशांतयः ॥

१० भविष्ये

" शनैश्चरं राहुकेतु लोहपात्रेषु निक्षिपेत्। कृष्णागुरुः स्मृतो धूपो दक्षिणा च स्वशक्तितः ॥
" यथाक्रमं शमीदूर्वाकुशानां समिधः स्मृताः। सप्तमे त्वथ संप्राप्ते नवौर्णान्वाऽथ कारयेत् ॥
" कृष्णवस्त्रयुगाच्छन्नमेकैकं कारयेद्बुधः। मृगनाभ्या समालभ्य कृशरान्विनिवेद्य च ॥
" होमावसाने तत्सर्वं ब्राह्मणायोपपादयेत् ॥
१५ " शनैश्चर नमस्तेऽस्तु नमस्ते राहवे तथा। केतवे च नमस्तुभ्यं सर्वे शांतिं प्रयच्छतु ॥
" एवं कृते भवेद्यत्तु तन्निबोध नृपोत्तम ॥
" यदि भौमो रविसुतो भास्करो राहुणा सह। केतुश्च मूर्ती तिष्ठंति सव पीडाकरा ग्रहाः ॥
" अनेन कृतमात्रेण सर्वे शाम्यंत्युपद्रवाः। "

इति शन्यादिशांतिः।

२० भविष्योत्तरे

" शनौ मंदस्य दिवसे स्नानमभ्यंगपूर्वकम्। कार्यं देयं च विप्राय तैलमभ्यंगहेतवे ॥
" यस्तु संवत्सरं यावच्छनिर्दिने रतः। तैलं ददाति विप्राणां स्वशक्त्याऽभ्यज्यतेऽपि वा ॥
" ततः संवत्सरस्यांते प्राप्ते तस्य दिने पुनः। लोहं घटयित्वा सौरिं तैलकुंभे विनिक्षिपेत् ॥
" लोहे वा मृन्मये वाऽथ कृष्णवस्त्रयुगान्वितं। कृष्णगोदक्षिणायुक्तं कृष्णकंबलशायिनं ॥
२५ " स्वयमभ्यंगतः स्नात्वा कृष्णपुष्पैस्तमर्चयेत्।
" सुगंधिगंधधूपैश्च कृशरान्नैस्तिलोदनैः। पूजयित्वा सूर्यपुत्रं क्षमस्वेति पुनःपुनः ॥
" कृष्णाय द्विजमुख्याय तदभावे नराय च। देयः शनैश्चरो भक्त्या मंत्रेणानेन वै द्विज ॥
" क्रूरावलोकनवशाद्वनं नाप्नोति यो ग्रहो रुष्टः। तुष्टो धनकनकसुखं ददाति सोऽस्मात् शनैश्चरः पातु ॥
" यः पुनर्नष्टराज्याय नराय परितोषितः। स्वप्ने ददौ निजं राज्यं स मे सौरिः प्रसीदतु ॥
३० " कोणं नीलांजनप्रख्यं मंदचेष्टाप्रसारिणं। छायामार्तंडसंभूतं नमस्यामि शनैश्चरं ॥
" नमोऽर्कपुत्राय शनैश्चराय नीहारवर्णांजनमेचकाय।
" श्रुत्वा रहस्यं भव कामदस्त्वं फलप्रदो मे भव सूर्यपुत्र ॥

१ ड–नराणां। २ ङखघ–पाठः। ३ ख–विरः; घ–वेय। ४ ड–क्रमात्। ५ डघ–नवर्णान्। ६ ट–च। ७ ट–यादिनेश्वयद् शोभित। ८ ड–मंदं।

" नमोस्तु प्रेतराजाय कृशदेहाय वै नमः । शनैश्चराय क्रूराय शुद्धबुद्धिप्रदायिने ॥
" य एभिर्नामभिः स्तौति तस्य तुष्टिं ददात्यसौ । तदीयं तु भयं तस्य स्वप्नेऽपि न भविष्यति ॥"
स्कांदे
" श्रावणे मासि संजाते शोभने शनिवासरे । लोहरूपं शनिं कृत्वा स्नाप्य पंचामृतैर्नवैः ॥
" पुष्पैरष्टविधैर्धूपैः फलैश्चैव विशेषतः । नामभिः पूजयेदेतैः क्रमेण ग्रहमुत्तमं ॥ ५
" कोणस्थः पिंगलो बभ्रुः कृष्णो रौद्रोऽन्तको यमः । सौरिः शनैश्चरो मंदः पिप्पलादेन संस्तुतः ॥
" शन्नो देवीति सर्वत्र वैदिकेन च पूजयेत् । पूजयित्वा च नैवेद्यं ततः कुर्यात्क्रमेण तु ॥
" समाषभक्तं प्रथमे द्वितीये पायसं शुभं । तृतीये त्वंबिली कार्या चतुर्थे पूरिका शुभा ॥
अंबिली तक्रतंडुलपिष्टादिनिर्मितो लेह्यविशेषः ।
इति शनिव्रतं । १०

## अथ शनिस्तोत्रं ।

" ततः कृतांजलिर्भूत्वा स्तुतिं चक्रे स बालकः । पिप्पलादो द्विजश्रेष्ठः प्रणिपत्य मुहुर्मुहुः ॥
" नमस्ते कोणसंस्थाय पिंगलाय नमोऽस्तु ते । नमस्ते बभ्रुरूपाय कृष्णाय च नमोऽस्तु ते ॥
" नमस्ते रौद्रदेहाय नमस्ते चांतकाय च । नमस्ते यमसंज्ञाय नमस्ते सौरये विभो ॥
" नमस्ते मंदसंज्ञाय शनैश्चर नमोऽस्तु ते । प्रसादं कुरु देवेश दीनस्य प्रणतस्य च ॥" १५
शनैश्चर उवाच
" परितुष्टोऽस्मि ते वत्स स्तोत्रेणानेन सांप्रतं । वरं वरय मे वत्स येन यच्छामि वांछितम् ॥"
पिप्पलाद उवाच
" अद्य प्रभृति नो पीडा बालानां रविनंदन । त्वया कार्या महाभाग न स्वकीया कथंचन ॥
" यावद्द्वादशकं जातं मम बाल्येन सूर्यज । स्तोत्रेणानेन योऽन्यस्त्वां ब्रूयात्प्रातरुपस्थितः । २०
" तस्य पीडा न कर्त्तव्या त्वया भास्करनंदन । तस्य पीडा न कर्त्तव्या देयो लाभो महाभुज ।
" अर्द्धाष्टमिकया योगे तावके संस्थिते नरः ।" सार्द्धसप्तवर्षपर्यंतं द्वादशजन्मद्वितीयराशिभिर्यः
शनैश्चरयोगः सोऽर्द्धाष्टमिकया योग इत्युच्यते ।
" तव वारे तु संप्राप्ते यस्तिलान् होमसंयुतान् । शक्त्या ददाति नो तस्य पीडा कार्या त्वया विभो ॥
" कृष्णां गां यस्तु विप्राय तवोद्देशेन यच्छति । अर्द्धाष्टमिकया पीडा तस्य कार्या त्वया न च ॥ २५
" शमीसमिद्भिर्यो होमं तवोद्देशेन निर्वपेत् । तथा कृष्णतिलैश्चैव कृष्णपुष्पानुलेपनैः ॥
" पूजा करोति यस्तुभ्यं धूपं वै गुग्गुलं दहेत् । कृष्णवस्त्रेण संवेष्ट्य त्याज्या तस्य त्वया व्यथा ।"
सूत उवाच
" एवमुक्तः शनिस्तेन बाढमित्यवजल्प्य च । नारदं समनुज्ञाय जगाम निजसंश्रयं ॥"
इति शनैश्चरशांतिः ॥ ३०

## अथार्कविवाहः ।

प्रयोगरत्ने मात्स्ये
" तृतीयां मानुषीं नैव चतुर्थीं य· समुद्वहेत् । पुत्रपौत्रादिसंपन्नः कुटुंबी साग्निको वरः ॥ ३
" उद्वहेद्रतिसिद्ध्यर्थं तृतीयां न कदाचन ॥

१ ह्य—र्नवैः । २ अनधरखल्लक-स्तु । ३ ह्यख-र्मांस्वः । ४ ह्य-इति ।

" मोहादज्ञानतो वापि यदि गच्छेत्तु मानुषीं। नश्यत्येव न संदेहो गर्गस्य वचनं यथेति ॥ "

तत्रैव संग्रहे

" तृतीयां यदि चोद्वाहेत्तर्हि सा विधवा भवेत्। चतुर्थादिविवाहार्थं तृतीयेऽर्कं समुद्वहेत् ॥

" आदित्यदिवसे वाऽपि हस्तर्क्षे वा शनैश्चरे। शुभे दिने वा पूर्वाह्णे कुर्यादर्कविवाहकं ॥ "

५ व्यासः

" स्नात्वाऽलंकृतवासास्तु रक्तगंधादिभूषितं। सुपुष्पफलशाखैकमर्कगुल्मं समाश्रयेत् ॥

" सल्लक्षणेन संयुक्तमर्कं संस्थाप्य यत्नतः। अर्ककन्याप्रदानार्थमाचार्यं कल्पयेत्पुरा ॥

" अर्कसन्निधिमागत्य तत्र स्वस्त्यादि वाचयेत्। नांदीश्राद्धे हिरण्येन अष्टवर्गान्प्रपूजयेत् ॥

" पूजयन्मधुपर्केण वरं विप्रस्य हस्ततः। यज्ञोपवीतं वस्त्रं च हस्तकर्णादिभूषणं ॥

१० " उष्णीषगंधमाल्यादि वरायास्मै प्रदापयेत्। स्वशाखोक्तप्रकारेण मधुपर्कं समाचरेत् ॥ "

ब्राह्मे

" ग्रामात्प्राच्यामुदीच्यां वा सुपुष्पफलसंयुतं। परीक्ष्य यत्नतोऽधस्तात्स्थंडिलादि यथाविधि ॥ "

कुर्यादिति शेषः।

" कृत्वार्कं पुरतस्तिष्ठन् प्रार्थयेत द्विजोत्तमः ॥ "

१५ " त्रिलोकवासिन् सप्ताश्वच्छायया सहितो रवे। तृतीयोद्वाहजं दोषं निवारय सुखं कुरु ॥

" तत्राध्यारोप्य देवेशं छायया सहितं रविं। वस्त्रैर्माल्यैस्तथा गंधैस्तन्मंत्रेणैव पूजयेत् ॥

" तंत्रैव श्वेतवस्त्रेण तथा कार्पासतंतुभिः। गंधपुष्पैः समभ्यर्च्य अष्टिगैरभिषिच्य च ॥

" गुडौदनं तु नैवेद्यं तांबूलं च समर्पयेत् ॥ "

व्यासः

२० " अर्कं प्रदक्षिणीकुर्वन् जपेन्मंत्रमिमं बुधः।

" मम प्रीतिकरा येयं मया सृष्टा पुरातनी। अर्कजा ब्रह्मणा सृष्टा अस्माकं प्रतिरक्षतु ॥

" पुनः प्रदक्षिणीकुर्यान्मंत्रेणानेन मंत्रवित् ॥

" नमस्ते मंगले देवि नमः सवितुरात्मजे। त्राहि मां कृपया देवि पत्नी त्वं मे इहागता ॥

" अर्क त्वं ब्रह्मणा सृष्टः सर्वप्राणिहिताय च। वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्धनः ॥

२५ " तृतीयोद्वाहजं पापं मृत्युं चाशु विनाशय। ततश्च कन्यावरणं त्रिपुरुषं कुलमुद्धरेत् ॥

" आदित्यः सविता चार्कः पुत्री पौत्री च नप्त्रिका। गोत्रं काश्यप इत्युक्तं लोके लौकिकमाचरेत् ॥

" सुमुहूर्ते निरीक्षेत स्वस्तिसूक्तमुदीरयन्। आशीर्भिः सहितैः कुर्यादाचार्यप्रमुखैर्द्विजैः ॥

" अथाचार्यं समाहूय विधिना तन्मुखाच्च तां। प्रतिगृह्य ततो होमं गृह्योक्तविधिना चरेत् ॥ "

व्यासः

३० " अर्ककन्यामिमां विप्र यथाशक्ति विभूषितां। गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रय ॥

" अंजल्यक्षतकर्माणि कृत्वा कंकणपूर्वकं। यावर्यचतुता सूत्रं तावदर्कं प्रवेष्टयेत् ॥

---

१ टन -मु, क -अगुल। २ टह -मले। ३ कलनरदयञ—उमाश्रयेत।

" स्वशाखोक्तेन मंत्रेण गायत्र्या वाऽथ वा जपेत् । पंचीकृत्य पुनः सूत्रं स्कंधे बध्नाति मंत्रतः ॥
" बृहत्सामेति मंत्रेण सूत्ररक्षां प्रकल्पयेत् । अर्कस्य पुरतः पश्चाद्दक्षिणोत्तरतस्तथा ॥
" कुंभांश्च निक्षिपेत्पश्चादाग्नेयादिचतुष्टये ।
" सवस्त्रं प्रतिकुंभं च त्रिसूत्रेणैव वेष्टयेत् । हरिद्रागंधसंयुक्तं पूरयेच्छीतलं जलं ॥
" प्रतिकुंभं महाविष्णुं संपूज्य परमेश्वरं । पाद्यार्घादिनिवेद्यांतं कुर्यात्प्राग्वैव मंत्रवित् ॥ " ५

अत्र शौनकोक्तो होमप्रकारः

" तृतीये स्त्रीविवाहे तु संप्राप्ते पुरुषस्य तु । आर्के विवाहं वक्ष्यामि शौनकोऽहं विधानतः ॥
" अर्कसंन्निधिमागत्य तत्र स्वस्त्यादि वाचयेत् । नांदीश्राद्धं प्रकुर्वीत स्थंडिलं च प्रकल्पयेत् ॥
" अर्कमभ्यर्च्य सौर्या च गंधपुष्पाक्षतादिभिः । " सौर्या सूर्यदेवत्यया । आकृष्णेनेत्यनया ।
" स्वयं वाऽलंकृतस्तद्वत् वस्त्रमाल्यादिभिः शुभैः । अर्कस्योत्तरदेशे तु समन्वारब्ध एतया ॥ " १०

एतया अर्ककन्यया ।

" उल्लेखनादिकं कुर्यादाघारांतमतः परं । आज्याहुतिं च जुहुयात्संगोभिरनयैकया ॥
" यस्मै त्वाकामकामायेत्येतयर्चा ततः परं । व्यस्ताभिश्च समस्ताभिस्ततश्च स्विष्टकृद्भवेत् ॥
" परिषेचनपर्यंतमयाश्चेत्यादिकं क्रमात् ॥ "

*प्रार्थनामंत्रादि विशेषमाह व्यासः* १५

" पुनः प्रदक्षिणं कृत्वा मंत्रमेतमुदीरयेत् ॥
" मया कृतमिदं कर्म स्थावरेषु जरायुणा । अर्कापत्यानि नो देहि तत्सर्वं क्षंतुमर्हसि ॥
" इत्युक्त्वा शांतिसूक्तानि जप्त्वा तं विसृजेत्पुनः । गोयुग्मं दक्षिणां दद्यादाचार्याय च भक्तितः ॥
" इतरेभ्योऽपि विप्रेभ्यो दक्षिणां चापि शक्तितः । तत्सर्वं गुरवे दद्यादंते पुण्याहमाचरेत् ॥ "

## अथ प्रयोगः २०

तृतीयोद्वाहात्प्राग्दिनचतुष्टयाधिकव्यवहिते रविवारे शनिवारे हस्तनक्षत्रे शुभदिनांतरे वा ग्रामात्प्राच्यामुदीच्यां वा पुष्पफलयुतार्कोपस्तात्स्थंडिलं कृत्वाऽर्कपश्चिमत उपविश्य मासपक्षाद्युल्लिख्य मम तृतीयमानुषीविवाहजदोषापनुत्त्यर्थमर्कविवाहं करिष्य इति संकल्प्य गणेशपूजास्वस्तिवाचनमातृपूजनवृद्धिश्राद्धाचार्यवरणानि कुर्यात् । तत्र वृद्धिश्राद्धं हेम्ना । अथाचार्येण पूजितो वरः २५

" त्रिलोकवासिन् सप्ताश्वच्छायया रहितो रवे । तृतीयोद्वाहजं दोषं निवारय सुखं कुरु ।"

इत्यर्कं संप्रार्थ्याऽर्के " आ कृष्णेनेति " छायासहितं रविमावाह्य श्वेतवस्त्रसूत्राभ्यामावेष्ट्य संपूज्यापो हि ष्ठेत्यादिः मिरभिषिच्य गुडोदनतांबूलादि समर्प्य प्रदक्षिणीकुर्वन्

" मम प्रीतिकरा येयं मया सृष्टा पुरातनी । अर्कजा ब्रह्मणा सृष्टा अस्माकं प्रतिरक्षत्विति" पठेत्। ३०

द्वितीयप्रदक्षिणायां तु

" नमस्ते मंगले देवि नमः सवितुरात्मजे । त्राहि मां कृपया देवि पत्नी त्वं मे इहागता ॥

१ ड—पाठः । २ इदद्वनयद—अर्के । ३ इकरनयद—सर्वं । ४ ह्ल—अत्र । ५ ह्ल—चौ.

" अर्क त्वं ब्रह्मणा सृष्टः सर्वप्राणिहिताय च । वृक्षाणामादिभूतस्त्वं देवानां प्रीतिवर्द्धनः ॥
" तृतीयोद्वाहजं पापं मृत्युं चाशु विनाशयेति ॥ "

तत आचार्येण मासपक्षाद्युल्लिख्य काश्यपगोत्रामादित्यस्य पुत्रीं सवितुः पौत्रीमर्कस्य प्रपौत्रीमिमामर्ककन्यामित्युक्ते वरः स्वस्ति न इंद्रो वृद्धश्रवा इति सूक्तं पठन्नर्कं निरीक्षेत । तत आचार्यो
५ विप्रैः सहाशिषो दत्वामुकगोत्रामुकशर्मणे संप्रददे इत्यर्ककन्या दत्वा

" अर्ककन्यामिमां विप्र यथाशक्तिविभूषितां । गोत्राय शर्मणे तुभ्यं दत्तां विप्र समाश्रयेति " पठेत्[1] वरस्तु यशो मे कामः समृद्ध्यतामिति प्रथमां धर्मो मे इति द्वितीयां यशो मे इति तृतीयामिति त्रीनक्षतांजलीनर्कोपरि क्षिप्त्वा गायत्र्या परिवेष्टयादिना वा पंचावृता सूत्रेणार्कमावेष्ट्य तत्सूत्रं पुनः पंचगुणं कृत्वाऽर्कस्य स्कंधे बध्वा बृहत्सामेति रक्षां परिकल्प्यार्कस्य दिग्विदिक्ष्वष्टौ कुमान्
१० संस्थाप्य वस्त्रेण त्रिसूत्रेण चावेष्ट्य हरिद्रागंधाक्षतः क्षिप्त्वा तेषु नाम्ना महाविष्णुमावाह्य षोडशोपचारैः संपूज्य स्थंडिलेऽग्निं प्रतिष्ठाप्य आघारावाज्येनेत्यंतमुक्त्वाऽत्र प्रधानं बृहस्पतिमग्निं वायुं सूर्यं प्रजापतिं चाज्येन शेषेणेत्याद्युक्त्वाघारांते सगोमिरंगिराबृहस्पतिस्त्रिष्टुप् । अर्कविवाहहोमे विनियोगः । ॐ संगोभिरांगिरसो नक्षमाणो भग इवेदर्यमणं निनाय । जने मित्रो नदंपती अनक्ति बृहस्पते वाजयाशूँरिवाजौ स्वाहा । बृहस्पतय इदं न ममेति त्यजेत् । यस्मै त्वा वामदेवोऽग्नि-
१५ स्त्रिष्टुप् विनियोगः प्राग्वत्

" ॐ यस्मै त्वा कामकामाय वयं संम्राड्यजामहे । तमस्मभ्यं कामं दत्त्व यथेदं त्वं घृतं पिब स्वाहाग्नय इदं० । ततो व्यस्तसमस्तव्याहृतिभिर्हुत्वा स्विष्टकृदादि कर्मशेषं समाप्यार्कं प्रदक्षिणीकृत्य " मया कृतमिदं कर्म स्थावरेण जरायुणा । अर्कापत्यानि नो देहि तत्सर्वं क्षंतुमर्हसीति " प्रार्थ्याचार्याय गोयुग्ममन्येभ्यश्च विप्रेभ्यो यथाशक्ति दक्षिणां दत्वा शांतिसूक्तं जपन्वा पूज्योपस्करा-
२० नाचार्याय दत्वा दिनचतुष्टयमग्निं कुंभांश्च रक्षेत् । कुंभेषु महाविष्णुं पूजयेच्च ।

पंचमदिनकृत्यं ब्राह्मे

" चतुर्थे दिवसेऽतीते पूर्ववत्तां प्रपूज्य च । विसृज्य होममग्निं च त्रिधिना मानुषीं वरां ॥
" उद्वहेदन्यथा नैव पुत्रपौत्रसमृद्धिमान् ॥ "

इति श्रीभट्टनीलकंठकृते भगवंतभास्करे शांतिमयूखेऽर्कविवाहः ।

२९

## अथ रजोदर्शनशांतिः

नारदः

" कुलीरवृषचापांत्यनृयुक्कन्यातुला घटाः । राशयः शुभदा ज्ञेया नारीणां प्रथमार्तवे ॥ "
कुलीरः कर्कटः । चाप धनुः । अंत्यो मीनः । नृयुङ्मिथुनं । घटः कुंभ. ।

स्मृतिचंद्रिकायां

२० " शुक्लपक्षे सुशीला स्यात्कृष्णे ॥ कुलटा भवेत् । कृष्णस्य दशमीं यावत् मध्यमं फलमादिशेत् ॥ "

1 म.—गो. ८।२।१७

तथा तत्रैव

" अमा रिक्ताष्टमी षष्ठी द्वादशी प्रतिपत्स्वपि । परिघस्य च पूर्वार्द्धे व्यतीपाते च वैधृतौ ॥
" संध्यासूपप्लवे विष्ट्यामशुभ प्रथमार्त्तवं । रोगी पतिव्रता दुःखी पुत्रिणी भोगभागिनी ॥
" पतिव्रता क्लेशयुक्ता सूर्यवारादिषु क्रमात् ॥"

कश्यपस्तु  ५

" अष्टमी पञ्चमा रिक्ता द्वादशीसंक्रमेऽपि वा । वैधृतौ व्यतिपाते च ग्रहणे चंद्रसूर्ययोः ॥
" विष्ट्यां संध्यासु निद्रायां दुर्भगा प्रथमार्त्तवा " ॥

नक्षत्रफलमाह गर्गः

" सुभगा चैव दुःशीला वंध्या पुत्रसमन्विता । धर्मयुक्ता व्रतघ्नी च परसंतानमोदिनी ॥
" सुपुत्रा चैव दुःपुत्रा पितृवेश्मरता सदा । दीना प्रज्ञावती चैव पुत्राढ्या चित्रकारिणी ॥  १०
" साध्वी पतिव्रता नित्यं सुपुत्रा कष्टचारिणी । स्वकर्मनिरता हिंसा पुण्या पौत्रादिसंयुता ॥
" नित्यं धनकथासक्ता पुत्रधान्यसमन्विता । मूर्खार्थाढ्या गुणवती दस्रक्षादिः क्रमात्फलं ॥ "

स्मृतिरत्ने

" शुभं चैव तु पूर्वाह्णे मध्यान्हे मध्यमं फलं । अपरान्हे तु वैधव्यं पूर्वरात्रे शुभं भवेत् ॥
" मध्यरात्रे तु मध्यं स्यात्पररात्रे शुभान्विता "  १५

कश्यपः " मलिना मंदवारे तु रात्रावपि तथैव चेति " ॥

स्मृत्यंतरे " मध्यान्हे तु भवेद्वंध्या निशीथे विधवा भवेत् ॥ "

तथा

" अमासंक्रांतिविष्टयां च व्यतीपाते च वैधृतौ । परिघस्य तु पूर्वार्द्धे षट् षट् गंडातिगंडयोः ॥
" व्याघाते नवशूले तु नाड्यः पंच चतुर्दश । वैधव्यमर्थहानिं च सुतनाशं महद्भयं ॥  २०
" वैधव्यं शत्रुवृद्धिं च दारिद्र्यं क्षणजीवनं । तेजोहानिं समायाति सदा पुष्पवती क्रमात् ॥ "

स्थलभेदे फलभेदमाह वसिष्ठः

" ग्रामाद्बहिः परग्रामे वा चेत्स्याद्व्यभिचारिणी । पतिव्रता पतिस्थाने सुशीला गृहमध्यके ॥
" ग्राममध्ये तु वृद्धिश्च विधवा च दिगंबरा । परागारे च दुःशीला आयुष्यं जलसन्निधौ ॥
" वनमध्ये तु कन्यास्या धनधान्यसमृद्धिदा ॥" परागार इत्यनेनैव पितृमातृगृहं निषिद्धं । तथा  २५
च शिष्टाचारः । विशेषनिषेधस्तु न दृश्यते । तथा । " चंद्रे सद्गुणसंयुक्ते देवरातमताच्छुभं । "
शावाशौचेऽपि अशुभमिति गुरवः । वस्त्रफलमाह वसिष्ठः

" सुभगा श्वेतवस्त्रा स्यात्दृढवस्त्रा पतिव्रता । क्षौमवस्त्रा क्षितीशा स्यान्नववस्त्रा सुखान्विता ॥
" दुर्भगा जीर्णवस्त्रा स्याद्रोगिणी रक्तवाससा । नानाम्बरधरा नारी विधवा पुष्पिता यदि ॥  ३०

---

१ ह्र–मूका । २ ह्र–धनवती । ३ ह्रघस्व–वेश्या । ४ ह्र–हे ।

" मलिनांबरतो नारी दरिद्रा स्याद्रजस्वला ॥" रजोबिंदुफलमाह स एव
" वस्त्रे स्युर्विषमा रक्तबिंदवः पुत्रमाप्नुयात् । समाश्चेत्कन्यका चेति फलं स्यात्प्रथमार्तवे ॥ "

देवरातः

" संमार्जनीकाष्ठतृणाग्निशूर्पान् हस्ते दधाना कुलटा तदा स्यात् ।
५ " तल्पोपभोगे तपसि स्थिता चेद्दृष्टं रजो भाग्यवती तदा स्यात् ॥ "

नारदः

" तिथ्यृक्षवारा निद्याश्चेत् शेषः कर्म निवारयेत् । दोषाधिके गुणाल्पत्वे तत्तथापि न कारयेत् ॥
" दोषाल्पत्वे गुणाधिक्ये शेषः कर्म समाचरेत् । निंद्यर्क्षतिथिवारेषु यदि पुष्पं प्रदृश्यते ॥
" तत्र शांतिं प्रकुर्वीत घृतदूर्वातिलाक्षतैः । प्रत्येकं शतमष्टौ च गायत्र्या जुहुयात्ततः ॥
१० " स्वर्णगोभूतिलान्दद्यात्सर्वदोषापनुत्तये । भर्त्ता तत्राभिगमनं वर्जयेच्छुभदर्शनात् ॥ "

वसिष्ठोऽपि

" प्रभूतदोषं यदि दृश्यते तत्पुष्पं ततः शांतिककर्म कार्यं ।
" विवर्जयेदेव तदैकशय्यां यावद्रजोदर्शनमन्यघस्रे ॥ "

शौनकः

१५ " आर्तवानां तु नारीणां शांतिं वक्ष्यामि शौनकः । तिथिवारर्क्षयोगेभ्यो लग्नेशासनद्यांशकात् ॥
" ग्रहेभ्यो दुःस्थितेभ्यश्च तत्तद्दोषक्षयाय च । अत्र पुत्रस्य लाभाय दंपत्योरभिवृद्धये ॥
" पंचमेऽन्हि चतुर्थे वा ग्रहयज्ञपुरःसरः । तस्मिन्नहनि कर्त्तव्यमृतुहोमं विधानतः ॥
" आचार्यं वरयेत्प्रातर्भुवनेश्वरितुष्टये । होमार्थं च जपार्थं च वरयेदृत्विजो बहून् ॥
" यजमानो द्विजैः सार्द्धं शांतिहोमं समाचरेत् ॥
२० " गृहादीशानदिग्भागे देवतापूजनाय च । द्रोणप्रमाणधान्येन व्रीहिराशिरयं भवेत् ॥
" कुंभत्रयं न्यसेद्राशौ तंतुवस्त्रादिवेष्टितं । पूरयेत्तीर्थसलिलैः प्रतिकुंभं पृथक् पृथक् ॥
" सूक्तेनाप नवर्चेन प्रभुवं आप इत्यथ । छायायाः प्रवंतस्तद्वद्गायत्र्या च ततः क्रमात् ॥
" मध्यकुंभे क्षिपेद्वान्यमौषधानि च हेम च । ततश्च पंचरत्नानि गंधपुष्पाक्षतायुतान् ॥
" औषधानि च वक्ष्यंते मुनिभिः शांतिकारणात् ।
२५ " औदुंबर कुशा दूर्वा राजीवं चंपविल्वकाः । विष्णुक्रांताथ तुलसी बर्हिप शंखपुष्पिका ॥
" शतावर्यश्वगंधा च निर्गुंडी सर्षपद्वयम् । अपामार्गः पलाशश्च पनसो जीवनस्तथा ॥
" प्रियंगवश्च गोधूमाव्रीहयोऽश्वत्थ एव च । क्षीराज्यदधिसर्पिश्च पर्ण चैव तथोत्पलान् ॥
" कुरंटकश्च गुंजा च वचामुस्तकभद्रकाः" । इति । "द्वात्रिंशदौषधानीह गायत्र्या सर्वमाहरेत् ॥
" गजाश्वरथ्यावल्मीकसंगमाद्ध्रदगोकुलात् । राजद्वारप्रदेशाच्च मृदमानीय निक्षिपेत् ॥
३० " कुंभस्थापनमित्याह तत्तन्मंत्रेण कारयेत् । मृत्तिका चौषधादीनि मंत्रेण प्रक्षिपेत्क्रमात् ॥
" कुंभोपरि न्यसेत्पात्रं कांस्यं वा ताम्रमेव वा । मृन्मयं वेणुपात्रं वा स्वस्ववित्तानुसारतः ॥

---

१ ऋ. सं. ८।३।६ । २ ऋ. सं. ५।४।१७ । ३ ऋ. सं. ३।४।१० ।

" पात्रोपरि न्यसेद्रुक्मं प्रतिमां भुवनेश्वरीं । तन्मूल्यं वा न्यसेत्पात्रे इंद्राणीं च पुरंदरं ॥
" आचार्यः पूजयेद्देवीमंगावरणानि च । अन्यो वा पूजनं कुर्याद्गायत्र्या मंत्रसारया ॥
" इंद्राणीं पूजयेद्देवीमिंद्राणीमासु नारिषु । क्रमेण पूजयेदिंद्रं इंद्रं त्वा वृषभं वयं ॥
" अनेन विधिना चाथ पूजयेद्देवतात्रयं । आवाहनादिसकलैरुपचारैः पृथक् पृथक् ॥
" तन्मध्यमं स्पृशन् कुंभं मंत्रेण भुवनेश्वरीं । जपेदाचार्य आहोमाच्छ्रीसूक्तं च जपेत्ततः ॥ ५
" स्पृशन्वै दक्षिणं कुंभमृत्विगेको जपेदथ । चत्वारि रुद्रसूक्तानि चतुर्मंत्रोत्तराणि च ॥
" संस्पृशन्नुत्तरं कुंभं श्रीसूक्तं रुद्रसंख्यया । शत्रं इंद्राग्नीसूक्तं च तत्र चैवं स्पृशन् जपेत् ॥
" कुंभस्य पश्चिमे देशे शांतिहोमं समाचरेत् । अन्वाधानं ततः कुर्याद्धोमतंत्रं समाचरेत् ॥
" पूर्णपात्रनिधानांतं कृत्वा कार्यं द्विजैः सह । दूर्वाभितिलगोधूमैः पायसेन घृतेन च ॥
" पायसं श्रपयेत्तत्र सावित्रं च हविश्च तत् । कृत्वाज्यभागपर्यंतं हविरुद्वासनादिकं ॥ १०
" तिसृभिश्चैव दूर्वाभिरेकैका चाऽऽहुतिर्भवेत् । आभिर्मंत्रयुक्ताभिर्गायत्रीं जुहुयात्क्रमात् ॥
" अष्टोत्तरसहस्रं तु शतमष्टोत्तरं तु वा । तिलमिश्रैश्च गोधूमैर्द्रव्येणाप्याहुतीर्हुनेत् ॥
" जुहुयात्पायसेनैव आज्येन च हुनेत् क्रमात् । हविश्चतुष्टयेनैव प्रत्येकं शतसंख्यया ॥
" गायत्र्यैव तु होतव्यं हविरत्र चतुष्टयं । ततः स्विष्टकृतं हुत्वा रज्जुग्रहणं तथा ॥
" अथाश्वित्यादिभिर्हुत्वा समुद्रादूर्मिसूक्ततः । संततामाज्यधारांतां पूर्णाहुतिमथाचरेत् ॥ १५
" परिषेचनपर्यंतं होमशेषं समापयेत् । सहौषधिस्थितैस्तत्र प्रतिकुंभस्थितोदकैः ॥
" ऋतुमत्याः स्त्रियः शांतिं दंपतीभ्यां सुखाय च । अथाभिषेकमंत्राश्च प्रोच्यंते शौनकादिभिः ॥
" आपोहिष्ठेति नवभिः सूक्तेन च ततःपरं । इंद्रो अंग सुचेनैव पावमानीः क्रमेण तु ॥
" उभयं शृणवच्च नः स्वस्तिदाविश एकया । त्र्यंबकेनैव मंत्रेण जातवेदसे एकया ॥
" समुद्रज्येष्ठा इत्यादि चतुर्भिश्च प्रसिद्धकैः । त्रायंतामिति मंत्रैश्च त्रिभिश्चापि यथाक्रमं ॥ २०
" इमा आपस्तु चेनैव देवस्य त्वेति मंत्रतः । मंत्रेणाथ तमीशानं त्वमग्ने रुद्र इत्यथ ॥
" तमुष्टुहीति मंत्रेण भुवनस्य पितुस्तथा । या ते रुद्रेति मंत्रेण शिवसंकल्पमंत्रैः ॥
" इंद्र त्वां वृषभं वयं मंत्रैश्चैवाभिषेचयेत् । सा च वस्त्रांतरं धृत्वा पुनश्चैवोपवासिनी ॥ "
उपवासोऽत्र समीपावस्थानं ।
" विप्रानभ्यर्च्य विधिवद्गंधपुष्पाक्षतादिभिः । धेनुं पयस्विनीं दद्यादाचार्याय च भूषणैः ॥ २५
" सदक्षिणमनड्वाहं मद्याद्रुद्रजापिने । ऋत्विग्भ्यश्चाथ सर्वेभ्यो दद्याद्वै दक्षिणां ततः ॥
" महाशांतिं प्रयच्छाथ विप्राशीर्वचनं ततः । ब्राह्मणान् भोजयेच्चैव भुंजीयात्स्वजनैः सह ॥ "

स्मृतौ

" ब्राह्मणान् भोजयित्वा तु दैवज्ञं भोजयेत्ततः । एवं यः कुरुते शांतिं शौनकोक्तप्रकारतः ॥
" तदानिष्टं [illegible] सकलं सर्वं चापि विनश्यतीति ॥ " ३०

॥ इति शौनकोक्तरजोदर्शनदोषशांतिः ॥

## अथ प्रयोगः ॥

कर्ता देशकालौ स्मृत्वा 'मम पत्न्या प्रथमरजोदर्शनेऽमुकदुष्टमासादिसूचितारिष्टनिरसनार्थं
शान्तिं करिष्ये' इति संकल्प्य गणेशपूजनस्वस्तिवाचनमातृकापूजनाभ्युदयिकाचार्यर्त्विग्वरणानि
कुर्यात्। अथाचार्यो गृहेशान्यां प्रत्येकं भजावृत्या पदार्थानुसमयेन कुम्भत्रयं स्थापयेत् । तद्यथा मही
५ द्यौरिति[1] मध्ये तद्दक्षिणोत्तरतश्च स्पृष्ट्वा ओषधय इति स्पर्शक्रमेण तेषु स्थानेषु द्रोणप्रमाणान्
व्रीहीन् राशीकृत्य तेनैव क्रमेण राशित्रये आ कलशेष्विति कलशत्रयं संस्थाप्य मध्ये
"प्रसुव आपे"[2] इति नवर्भिस्तद्दक्षिणे यं प्रवत इत्यृचा तदुत्तरे गायत्र्या जलं क्षिप्त्वा त्रिष्वपि
"गन्धद्वारामिति"[3] गन्धं "या ओषधीरिति"[4] सर्वौषधीः "ओषधयः सं वदन्त इति"[5] यवान् क्षिप्त्वा मध्यम
एव यवव्रीहितिलमाषकङ्गुश्यामाकमुद्गान् क्षिप्त्वोदुम्बरकुशदूर्वारक्तोत्पलपञ्चबिल्वविष्णुक्रान्तातुलसी-
१० बर्हिपद्मपुष्पशितावर्यश्चगन्धा निर्गुण्डीरक्तपीतसर्षपापामार्गपलाशपनसजविकाशमीपगुगोधूममाध्वि-
त्यदधिदुग्धघृतपद्मपत्रनीलोत्पलसितरक्तपीतकुरटकगुञ्जावचामद्रकमुस्तकास्यानि द्वात्रिंशदौषधानि
यथासंभवं वा गायत्र्या क्षिप्त्वा त्रिषु दूर्वापञ्चपल्लवसप्तमृत्तिकाफलपञ्चरत्नसुवर्णानि क्षिप्त्वा
"युवा सुवासा"[6] इति वाससा सूत्रेण वा कुम्भकण्ठान्वेष्टयित्वा गन्धादिभिरलंकृत्य "पूर्णा
दर्वीति"[7] यवादिपूर्णपात्राणि निधाय तेषु साष्टदलं श्वेतवस्त्रत्रयं न्यस्य मध्यमे गायत्र्या विश्वामित्रो
१५ भुवनेश्वरी गायत्री भुवनेश्वर्यावाहने विनियोगः । तत्सवितुरिति[8] भुवनेश्वरीं तद्दक्षिणकुम्भे
इन्द्राणीं वृषाकपिरिन्द्राणीपतिः इन्द्राण्यावाहने विनियोगः । इन्द्राणी मास्विति[9] इन्द्राणीं उत्तर-
कुम्भे इन्द्रं त्वा विश्वामित्र इन्द्रो गायत्री इन्द्रावाहने विनियोगः । इन्द्रत्वेतीन्द्रं[10] प्रतिमासु
स्थाप्य षोडशभिः पञ्चभिर्वोपचारैरभ्यर्च्य मध्यमेऽष्टसहस्रमष्टशतं वा गायत्रीं श्रीसूक्तं च
जपेत् । ततः एकर्त्विक् दक्षिणकुम्भे ऐन्द्रसूक्तानि जपेत् । तानि च कद्रुद्रायेत्येकादशर्चं[11] ।
२० "इमा रुद्राय तवसे"[12] इत्येकादशर्चं । 'इमा रुद्राय स्थिरधन्वने'[13] इति पञ्चर्चं ।
आ ते पितरिति[14] पञ्चदशर्चं । तमुष्टुहीत्येका[15] । भुवनस्य पितरित्येका[16] । अथान्य-
श्चर्त्विगुत्तरकुम्भे एकादशावृत्तिभी रुद्रं शन्न इन्द्राग्नीति[17] पञ्चदशर्चं च जपेत् । अथा-
चार्यः कुम्भपश्चिमेऽग्निं प्रणीततदीशान्यां ग्रहस्थापनादिपूजान्तं कृत्वा तदीशान्यामेकं कुम्भं
संस्थाप्य तत्र वरुणावाहनादिपूजान्तं कृत्वाऽन्वादध्यात् । तत्रास्मिन्नन्वाहितेऽग्नावित्यादि चक्षुषी
२५ आज्येनेत्यन्तमुक्त्वा भुवनेश्वरीमिन्द्राणीमिन्द्रं च प्रत्येकममुकसंख्यया दूर्वातिलमिश्रगोधूमपायसाज्यैः
ग्रहांश्चामुकसंख्यया समिच्चर्वाज्यैः शेषेण स्विष्टकृतमित्यादि यक्ष्ये इत्यन्तमुक्त्वा परिस्तरणाद्याज्य
भागान्तं कृत्वा यजमानेनाग्न्याधानेन्द्राः वह्निरूपेणास्य इदं न मम इत्युक्ते ऋत्विग्भिः सहान्वायाभोग-
क्रमेण जुहुयात् । अन्ये तु
"गायत्र्यैव तु होतव्यं हविस्त्रं चतुष्टयं । ततः स्विष्टकृतं हुत्वेत्यत्रेन्द्राणीन्द्रयोर्होमानभिधानान्न तयो
३० र्होमोऽन्वाधाने वा कीर्तनमित्याहुः । ततः स्विष्टकृदादिबलिदानान्तं कृत्वा समुद्रादूर्मिरिति[18] तृचेन

---

१ ऋ. सं. १।२२।१३ । २ ऋ. सं. ८।५।११ । ३ ऋ. सं. ६।७।७ । ४ ऋ. सं. ८।३।१६ । ५ ऋ.
सं. ५।४।१७ । ६ ऋ. सं. ८।५।११ । ७ ऋ. सं. ८।५।१८ । ८ ऋ. सं. ३।१।१३ । ९ ऋ. सं. ३।४।१० ।
१० ऋ. सं. ८।४।१३ । ११ ऋ. सं. ३।३।१७ । १२ ऋ. सं. १।३।२६ । १३ ऋ. सं. १।८।५ । १४ ऋ. सं.
५।४।१३ । १५ ऋ. सं. २।७।२६ । १६ ऋ. सं. ४।२।१९ । १७ ऋ. सं. ४।८।६ । १८ ऋ. सं. ५।३।२८ ।
१९ ब्रा-चा । २० ऋ. सं. ३।८।१० ।

पूर्णाहुति हुत्वा प्रणीताविमोक कृत्वा ऋत्विग्भि सह सभार्य यजमान कुभोदकैरभिषिचेत् । तत्र मन्त्रा[1] । आपोहिष्ठेति नवर्चं[2] । य एक इद्विद् यत इत्येका त्रिभिष्ट्वदेवेति ऋच । उभय शृणवच्च नेति स्वस्तिदा विशोयमिति । त्र्यम्बकोमिति । जातवेदस इति । समुद्रज्येष्ठा इति चतस्र । आयताभिति तृच । इमा आप इति तृच । देवस्य त्वेति मन्त्रे । तमीशान जगत । त्वमग्ने रुद्रं इत्येक यजुः । तमुष्टुहीति । भुवनस्यें पितर । या ते रुद्रेति । यज्जाग्रत इति षट् । एते याजुषा । इद्र त्वा वृषभ वयमिति ऋच । सुरास्त्वामभिषिचन्त्वित्याद्या पौराणा । एवमभिषिक्त सुस्नातो धृत शुक्लवासाः सपत्नीको यजमानोऽग्निमाचार्यादींश्च सपूज्याचार्याय धेनु ब्रह्मणे ऋत्विग्भ्यश्च यथाशक्ति दक्षिणा रुद्रजापिने सदक्षिणमनड्वाह भूयसीं च दत्वा ग्रहपीठदेवताना भुवनेश्वर्यादीना चोत्तर-पूजा कृत्वा यातु देवगणा इति विसृज्याचार्याय प्रतिपाद्य गच्छ गच्छेत्यग्नि विसर्जयेत् । ततो ब्राह्मणा शाति पठेयु । तत्र मन्त्रा । आ नो भद्रा इति ऋच । स्वस्ति नो मिमीतामिति ऋच । स्योनापृथिवीति ऋच । तच्छयोरिति च । ततो यजमानो द्वादशब्राह्मणान् भोजयित्वा सकल्प्य वा विप्राशिषो गृहीत्वा सुहृद्युतो भुजीत ।

अथ चन्द्रार्कोपरागकालीनाद्यरजोदर्शने विशेष ।

कर्त्तोक्तकाले मासपक्षाद्युल्लिख्य 'मम पत्न्याश्चन्द्रस्य सूर्यस्य वा उपरागे प्रथमरजोदर्शनसूचिता-निष्टनिरासार्थ शार्ति करिष्य' इति सकल्प्य प्राग्वत् स्वस्तिकपूजात कुर्यात् । अथाचार्यो गोमयोप-लिप्ते देशे पचवर्णैरष्टदल कृत्वा तत्र श्वेतवस्त्रमुरगदश प्रसार्य तत्र चन्द्रोपरागे आप्यायस्वेति राजत्या प्रतिमाया चन्द्रसूर्योपरागे तु ओंकृष्णेनेति सौवर्ण्या वा सूर्य प्रतिमायामावाह्य तदुत्तरत स्वर्भानो इति सैस्या प्रतिमाया राहुमावाह्य यस्मिन्नक्षत्रे ग्रहण तन्नक्षत्रदेवता सौवर्णप्रतिमाया तत्त-न्मन्त्रै प्रणवादिनमोन्तैर्नाममन्त्रैर्वाऽऽवाह्य कालानुसमयेन षोडशोपचारै पूजयेत् । तत्र चन्द्राय नक्षत्र देवताभ्यश्च श्वेतानि वस्त्रादीनि । सूर्याय रक्तानि । राहवे कृष्णानि । तत पश्चिमतोऽग्नि प्रतिष्ठाप्य पक्षे ग्रहावाहनादिपूजात कृत्वाऽन्वादध्यात् । तत्र चक्षुषी आज्येनेत्यतमुक्त्वा चन्द्र सूर्य वा राहु नक्षत्रदेवता पक्षे ग्रहाश्चामुकसख्यया समिदाज्यचरुतिलाहुतिभि शेषेणेत्यादि समित्सु विशेष । चन्द्रर्क्षदेवतयो पालाश सूर्यस्यार्क । राहोर्दूर्वा । ताश्च तिस्र एकाहुति । अथाज्यभागात कृत्वा यजमानेन द्रव्ये त्यक्तेऽन्वाधानक्रमेणर्त्विग्भि सह हुत्वा स्विष्टकृदादिपूर्णाहुत्यत प्राग्वत् कृ वै-कस्मिन् कुभे जलपचगव्यरत्नत्वक्पल्लवसर्वौषधिकल्कदूर्वाकुशान्निक्षिप्य सार्त्विक दपती पूर्ववदभि-षिंचेत् । तत्र मन्त्रा । आपो हिष्ठेति ऋच । इम मे गगे इत्येका । तत्वायामीत्येका । अन्येऽपि समुद्रज्येष्ठा सुरास्त्वामित्याद्यश्च । शेष पूर्ववत् ॥

इति दुष्टरजोदर्शनशातिप्रयोग ॥

## अथ गोमुखप्रसवः ।

गर्ग

" पित्रारिष्टे सुतारिष्टे मात्रारिष्टे तथैव च । प्रायश्चित्त तदा कुर्यात्तत्तद्दोषस्य शातये ॥ "

तादृशनक्षत्रोत्पत्या सूचिते पित्राद्यरिष्टे प्रायश्चित्तमित्यत्रापि तत्तादित्यन्वेति देहलीदीपवत् ।

---

१ ऋ. स ७।६।५ । २ ऋ. स १।६।६ । ३ ऋ स ७।२।१८ ६।४।३६ । ४ ऋ स ८।८।१० । ५ ऋ. स ५।४।३० । ६ ऋ स १।७।७ । ७ ऋ स ५।४।३६ । ८ ऋ. स ८।७।२५ । ९ ऋ स १।६।१५ । १० ऋ. सं २।५।१८ । ११ ऋ सं २।४।१३ । १२ ऋ स ४।८।६ । १३ ऋ स ३।३।११ । १४ ऋ. सं १।६।१५ । १५ ऋ. स ४।३।७ । १६ ऋ स ८।८।३६ । १७ ऋ. स ६।८।२९ । १८ ऋ स १।३।६ । १९ ऋ. सं ७।६।५ । २० ऋ. स ८।३।६ । २१ ऋ. स १।२।१५ । २२ ऋ स ५।७।१६ । २३ ह्म—तत्र दोवस्य

तत्तद्दोषशांत्यै तत्तत्प्रायश्चित्तं कुर्यादित्यर्थः ।

" पूषाश्विनोर्गुरौसर्पमघाचित्रेंद्रमूलभे । एषु ऋक्षेषु जातस्य कुर्याद्गोजननं तथा ॥

" जन्मर्क्षे वा त्रिजन्मर्क्षे शुभवारे शुभे दिने । कृत्वाभ्यंगादिकं सर्वं गृहालंकारपूर्वकं ॥

" गोमयेनोपलिप्याथ गृहस्येशानभागके । पंकजं कर्णिकायुक्तं रजोभिः श्वेतवर्णकैः ॥

५ " व्रीहींस्तत्र विनिक्षिप्य यथावित्तानुसारतः । नवशूर्पं तु तन्मध्ये रक्तवस्त्रं प्रसारयेत् ॥

" स्थापयित्वा शिशुं तत्र पुनः सूत्रेण वेष्टयेत् । प्राङ्मुखं तमवाक्पादं तिलगर्भगतं शिशुं ॥

" गोमुखं दर्शयित्वाऽस्य पुनर्जातं तु गोमुखात् । विष्णुर्योनिमितिसूक्तेन गव्येन स्नपयेच्छिशुं ॥

" गवामंगेति मंत्रेण गवामंगेषु संस्पृशेत् । विष्णोः श्रेष्ठेन मंत्रेण गोप्रसूतं तु बालकं ॥

" आचार्यस्तु समादाय पश्चान्मात्रे ददेत्तथा । माता जघन्यभागस्था शिशुमानीय तं मुखात् ॥

१० " ततः पित्रे तदा दद्यात्ततो मात्रे प्रदापयेत् । अंके स्थाप्य पिताऽथास्य पुत्रस्य मुखमीक्षयेत् ॥

" गोमूत्रं गोमयं क्षीरं दधिसर्पिश्च संयुतं । आपो हि ष्ठादिभिर्मंत्रैरभिषिंचेत्ततः शिशुं ॥

" मूर्ध्नि चाघ्राय तत्पुत्रं तन्मंत्रेण तदा पिता ।

" अंगादंगात्संभवसि हृदयादधिजायसे । आत्मा वै पुत्र नामासि संजीव शरदः शतं ॥ "

" मूर्द्धनि त्रिरवघ्राय तं शिशुं स्थापयेत्ततः । पुण्याहं वाचयेत्पश्चाद्ब्राह्मणैर्वेदपारगैः ॥

१५ " दरिद्रायाथ विप्राय तां गामभ्यर्च्य दापयेत् । गोवस्त्रस्वर्णधान्यानि दद्यादुक्तोदितः क्रमात् ॥

" यथाशक्ति धनं दद्याद्ब्राह्मणेभ्यस्तदा पिता । ततो होमं प्रकुर्वीत स्वस्वशाखोक्तमार्गतः ॥

" उल्लेखनादिकं कृत्वा चाज्यभागांतमाचरेत् ।

" होमस्यैशानदिग्भागे धान्योपरि शुभं घटं । पंचगव्यं घटे स्थाप्य तिलांस्तत्र विनिक्षिपेत् ॥

" क्षीरिवृक्षकषायांश्च पंचरत्नानि निक्षिपेत् ॥

२० " वस्त्रयुग्मेन संछाद्य गंधाद्यैरथार्चयेत् । विष्णुं वरुणमभ्यर्च्य प्रतिमां च विधानतः ॥

प्रतिमां यक्ष्महणः अग्रे तद्दैवत्यहोमविधानात् । चकाराच्च ।

" एतैं इंद्रादिभिर्मंत्रैः कुंभं स्पृष्ट्वाऽभिमंत्रयेत् । दधिमध्वाज्ययुक्तेन होमं कुर्याद्विधानतः ।

" आपो हि ष्ठेति तिसृभिर्प्सु मे सोम इत्यथ । तद्विष्णोः परमं पद्मक्षीभिर्येतिऽथ सूक्ततः ॥

" ऋग्भिराभिः प्रत्यृचं वाऽष्टाविंशतिसंख्यया ।

२५ " अशक्तश्चाष्टसंख्यं वा दधिमध्वाज्यसंयुतं । आदित्यादिग्रहाणां च होमं कुर्यात्समंत्रकं ॥ "

॥ इति गोमुखप्रसवविधिः ॥

## अथ प्रयोगः ।

मासपक्षाद्युल्लिख्यास्य 'शिशोरमुकर्क्षोत्पत्तिसूचितारिष्टशांत्यर्थं गोमुखप्रसवं करिष्ये' इत्युक्त्वा गणेशपूजनाचार्यवरणे कुर्यात् । अथाचार्यः श्वेताष्टदले व्रीहिस्थशूर्पे रक्तवस्त्रं विन्यस्य
३० तिलान्विकीर्य तत्र प्राङ्मुखं शिशुं संस्थाप्य सूत्रेणावेष्ट्या गोमुखात् प्रसवं विचिंत्य " विष्णुर्योनिमिति " सूक्तेन पंचगव्येन शिशुं संस्नाप्य " गवामंगेष्वेति " गां स्पृष्ट्वा

---

१ ऋ. सं. ८।८।४२ । २ ङ–स्थाप्य । ३ ऋ. सं. ७।६।५ । ४ ऋ. सं. ११५।११ । ५ ङ–भि. ६ ङख–यक्ष्मघ्नः; घ–यक्ष्मणः । ७ ऋ. सं. ६।४।२८ । ८ ऋ. सं. १।२।११ । ९ ऋ. सं. १।२।७ । १० ऋ. सं. ८।८।२१ । ११ ऋ. सं. ८।८।४२ ।

विष्णोः श्रेष्ठेनेति शिशुं गृहीत्वा मात्रे दद्यात् । माता पित्रे दद्यात् । पिता च मात्रे दत्वा तन्मुखं समीक्ष्य पंचगव्येनापो हि[1] ष्ठेति तिसृभिरभिषिच्यांगादिति मूर्ध्नि त्रिरवघ्राय मात्रे दत्वा पुण्याहं वाचयित्वा गामाचार्याय दत्वा ग्रहप्रीत्यर्थं गोवस्त्रस्वर्णधान्यादि दत्वा भूयसीं दद्यात् । अथाचार्योऽग्निं प्रतिष्ठाप्य चक्षुषी आज्येनेत्यंते अप ओपोहिष्ठेति तृचेन अप्सु म इत्यृचा च विष्णु तद्विष्णोरित्यृचा यक्ष्महेणमक्षीभ्यामिति सूक्तेन ग्रहांश्च प्रत्येकमष्टादिसंख्यया दधिमध्वाज्यैः शेषेण स्विष्टकृतमित्याद्युक्त्वाऽऽज्यभागांतं कृत्वाऽग्नेरीशान्यां कुंभं संस्थाप्य तत्र पंचगव्यतिलव्रीहिक्षीरद्रुमकषायान् क्षिप्त्वा वस्त्रयुग्मेनावेष्ट्य पूर्णपात्रोपरि तद्विष्णोरिति विष्णोस्तत्वायामीति वरुण स्यामिति यक्ष्महणश्च प्रतिमा अभ्यर्च्य यत इंद्रेति षडृचो जप्त्वाऽन्वाधानक्रमेण हुत्वा कर्मशेषं समापयेत् । ५

इति गोमुखप्रसवप्रयोगः ॥

## अथ सदंतोत्पत्तिशांतिः । १०

विष्णुधर्मोत्तरे

" उपरि प्रथमं यस्य जायंते च शिशोर्द्विजाः"। द्विजा दंताः।"दंतैर्वा सह यस्य स्याज्जन्म भार्गवसत्तम॥
" मातरं पितरं वाथ खादेदात्मानमेव वा । तत्र शांतिं प्रवक्ष्यामि तां मे निगदतः शृणु ॥
" गजपृष्ठगतं बालं नौस्थं वा स्नापयेद्द्विज । तदभावे च सर्वज्ञ कांचने च वरासने ॥
" सर्वौषधैः सर्वबीजैः सर्वपुष्पैः फलैस्तथा । पंचगव्येन रत्नैश्च मृत्तिकाभिश्च भार्गव ॥" १५
सर्वौषधानि सर्वगंधाश्च विनायकस्नपनविधौ दर्शिताः ।
" स्थालीपाकेन धातारं पूजयेत्तदनंतरं । सप्ताहं चात्र कर्तव्यं ततो ब्राह्मणभोजनम् ॥
" अष्टमेऽहनि विप्राणां तथा देया च दक्षिणा । कांचनं राजतं गाश्च भुवमागारमेव तु ॥
" दंतजन्मनि सामान्ये शृणु स्नानमतःपरं ।
" भद्रासने निवेश्यैनं मूर्ध्नि मूलैः फलैस्तथा । सर्वौषधैः सर्वगंधैः सर्वबीजैस्तथैव च ॥ २०
" स्नापयेत्पूजयेच्चात्र वन्हिं सोमं समीरणं । पर्वतांश्च तथा स्याताम् देवदेवं च केशवं ॥
" एतेषामेव जुहुयाद्धुतमग्नौ यथाविधि । ब्राह्मणानां तु दातव्या यथाशक्त्या तु दक्षिणा ॥
" ततस्त्वलंकृतं बालमासने चोपवेशयेत् । आसीनं सूर्यसंतानबीजैः सुस्नापयेत्ततः ॥
" सुविप्रबालकानां च तैश्च कार्यं च पूजनं । पूज्यश्च विधिनाऽऽचार्यो ब्राह्मणाः सुहृदस्तथा ॥"

इति सदंतोत्पत्तिशांतिः ॥ २५

## अथ कृष्णचतुर्दशीजननशांतिः ।

गर्गः

" कृष्णपक्षे चतुर्दश्यां प्रसूतेः षड्विधं फलं । चतुर्दशीं च षड्भागां कुर्यादाद्यं शुभं स्मृतं ॥
" द्वितीये पितरं हंति तृतीये मातरं स्मृतं । चतुर्थे मातुलं हंति पंचमे वंशनाशनं ॥
" षष्ठे तु धनहानिः स्यादात्मनो वंशनाशनं । तस्मात्सर्वप्रयत्नेन शांतिं कुर्याद्विधानतः ॥ ३०

---

१ ऋ. सं. ७।६।५। २ ऋ. सं. ११२।११। ३ ऋ. सं. ११२।७। ४ ऋ. सं. ८।८।२१। ५ ऋ. सं. ११२।१५
६ ऋ. सं. ६।४।१८।

" आचार्यं वरयेद्धीमान् पुत्रदारसमन्वितं । स्वकर्मनिरतं शांतं श्रोत्रियं वेदपारगं ॥
" सर्वालंकारसंयुक्तं सर्वलक्षणसंयुतं । प्रतिमा कारयेत् शंभोः कर्षमात्रसुवर्णतः ॥
" तदर्धार्धेन वा कुर्यात्सर्वलक्षणसंयुतं । वृषभे च समासीनं वरदाभयपाणिनं ॥
" शुद्धस्फटिकसंकाशं श्वेतमाल्यांबरान्वितं । त्र्यंबकेन च मंत्रेण पूजां कुर्याद्विधानतः ॥
५ " स्थापयेच्चतुरः कुंभांश्चतुर्दिक्षु यथाक्रमं । पुण्यतीर्थजलोपेतान् धान्यस्योपरि विन्यसेत् ॥
" तन्मध्ये स्थापयेत्कुंभं शतच्छिद्रसमन्वितं ॥
" पंचमृत्पंचरत्नानि पंचत्वक् पंचपल्लवान् । पंचधान्यं सुवर्णं च तत्तन्मंत्रैर्विनिक्षिपेत् ॥
" सर्वौषधानि निक्षिप्य श्वेतवस्त्रेण वेष्टयेत् । सुरभीणि च पुष्पाणि श्वेतानि परिवेष्टयेत् ॥
" सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः । आयांतु यजमानस्य दुरितक्षयकारकाः ॥
१० " आवाह्य वारुणैर्मंत्रैरनेन च विधानतः । इमं मे[1] वरुणेत्यनया तत्वायामि ऋचा तथा ॥
" त्वंनो अग्न इत्यनया स त्वन्न इति मंत्रतः । आग्नेयकुंभमारभ्य पूजां कुर्याद्यथाक्रमं ॥
" आ नो भद्राख्यसूक्तं च भद्रां अग्नेश्च सूक्ततः । जप्त्वा तु पौरुषं सूक्तं रुद्रं तु क्रमाज्जपेत् ॥
" ईश्वरस्याभिषेकं च ग्रहपूजां च कारयेत् । पूजाकर्मतु निर्वर्त्य होमं कुर्याद्विधानतः ॥
" गृहादीशानदिग्भागे कुंडं कार्यं विधानतः । विस्तारायामसतं च अरत्निद्वयसंमितं ॥
१५ " समिदाज्यचरूंश्चैव तिलमाषांश्च सर्षपैः । अश्वत्थप्लक्षपालाशसमिद्भिः खादिरैः शुभैः ॥
" अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा । अष्टाविंशतिमेवैश्च होमं कुर्यात्पृथक् पृथक् ॥
" त्र्यंबकेन मंत्रेण तिलान् व्याहृतिभिः क्रमात् । कृत्वा होमाश्च कर्तव्या अस्मदुक्तविधानतः ॥
" एवं क्रमेण कर्तव्यं होमशेषं समापयेत् । सर्वालंकारयुक्तानां त्रयाणामभिषेचनं ॥ "
त्रयाणां मातापितृशिशूनां ।
२० " चतुर्भिः कलशैरद्भिर्बृहत्कुंभसमन्वितं । धौतांबराणि धृत्वाऽथ कुर्यादाज्यावलोकनं ॥
" पूर्णाहुतिं च जुहुयाद्यजमानः समाहितः । तत्सर्वं परया भक्त्या ईश्वराय निवेदयेत् ॥
" सर्वालंकारसंयुक्तां सवत्सां गां पयस्विनीं । प्रतिमां वस्त्रयुग्मं च आचार्याय निवेदयेत् ॥
" अन्येषां चैव सर्वेषां कुर्याद्ब्राह्मणवाचनं । तस्मादेतेन विधिना वित्तशाठ्यविवर्जितः ॥
" एवं यः कुरुते शांतिं सर्वपापैः प्रमुच्यते । सर्वान्कामानवाप्नोति स्थिरजीवी सुखी भवेत् ॥ "
२५ इति कृष्णचतुर्दशीशांतिः ॥

## अथ सिनीवालीकुहूशांतिः ।

गार्ग्यः

" सिनीवाल्यां प्रसूता स्याद्यस्य भार्या पशुस्तथा । गजाश्वा महिषी चैव शक्रस्यापि श्रियं हरेत् ॥
" ये संति सकलाः पश्चात्तत्प्रसादोपजीविनः । वर्जयित्तानशेषांस्तु पशुपक्षिमृगादिकान् ॥

१ इ—पाठः २ ऋ सं. ५।४।३०। ३ ऋ. सं. १।२।१९। ४ ऋ. सं. १।२।१५। ५ ऋ. सं. ३।४।१२। ६ ऋ. सं. १।६।१५। ७ ऋ. म. ८।२।१९ ८ ऋ. सं. ८।४।१७। ९ ऋ. सं. १।३।२६। १० ऋ सं. ५।४।३०।

संपूज्य क्रमेण नो भद्रा भद्रां अग्ने सहस्रं शीर्षा कद्रुद्रायेति सूक्तानि क्रमाज्जप्त्वा महादेवं यथाशक्ति रुद्राध्ययादिनाभिषिच्य प्रधानावाह्य संपूज्य गृहेशान्यामग्निं संस्थाप्याऽन्वादध्यात्। तत्र चक्षुषी आज्येनेत्यंते चतुर्दशीशांतौ रुद्रमश्वत्थप्लक्षपलाशखदिरसमिद्भिराज्यचरुतिलमाषसर्षपैः प्रत्येकममुकसंख्यया व्यस्तसमस्तव्याहृतिभिस्तिलैश्चामुकसंख्यया यक्ष्य इत्यादि सिनी-

५ वाल्यां कुह्वां च रुद्रमिदं पितरश्च प्रधानदेवताः त्र्यंबकमंत्रेण च शक्तितस्तिलहोमोऽधिक इति विशेषः। तत आज्यभागांतेऽन्वाधानोक्तक्रमेण होमः। सिनीवालीकुह्वोस्तु गोवस्त्रसुवर्णभूक्षिराज्यगुडान् दत्वा गोमूत्रतिलहिरण्याज्यवस्त्रधान्यगुडरूप्यलवणदानानि च दश कृत्वा होमः कार्य इति विशेषः। ततो बलिदानांते कलशोदकैः शतच्छिद्रेणान्वेवस्यमंत्रैः पत्नीशिशुसहितोऽभिषिक्तो यजमान आज्यमवेक्ष्य पूर्णाहुतिं हुत्वा गुरवे धेनुं वासोयुग्मं ऋत्विग्भ्यश्च दक्षिणां दत्वा स्वस्ति

१० वाच्य कर्मेश्वरार्पणं कुर्यात्।

इति कृष्णचतुर्दशीसिनीवालीकुहूशांतिप्रयोगः॥

## अथ दर्शजननशांतिः।

नारदः

" अथातो दर्शजातानां मातापित्रोर्दरिद्रता। तद्दोषपरिहारार्थं शांतिं वक्ष्यामि नारदः।

१५ " पुण्याहं वाचयित्वादौ क्रतुसंकल्पपूर्वकं। कुंडं वा मंडलं कुर्यात्तद्देशे स्थापयेत् घटं।" मंडलं स्थंडिलं॥

" तत्कुंभे निक्षिपेद्द्रव्यं दधिक्षीरघृतादिकं। न्यग्रोधोदुंबराश्वत्थाः सचूताः प्लक्षकस्तथा॥

" एतेषां वृक्षमूलानां त्वचादीन् पल्लवांस्तथा। पंचरत्नानि निक्षिप्य वस्त्रयुग्मेन वेष्टयेत्॥

" सर्वे समुद्राः सरितस्तीर्थानि जलदा नदाः। आयांतु यजमानस्य दुरितक्षयकारकाः॥

" आपो हि ष्ठेति तृचेनाथ कयानश्चित्र इत्यृचा। यत्किंचेदमृचा चैव समुद्रज्येष्ठ इत्यृचा॥

२० " अभिमंत्र्योदकं पश्चादग्नेः पूर्वप्रदेशके। हरिद्रं रक्तकं चैव कृष्णं श्वेतं च जीरकं॥

" एतेषां तंडुलैश्चैव सर्वतोभद्रमुद्धरेत्। दर्शस्य देवतायाश्च सोमसूर्यस्वरूपकं॥

" प्रतिमां स्वर्णजां नित्यं राजतीं ताम्रजां तथा। सर्वतोभद्रमध्ये तु स्थापयेद्दर्शदेवताः॥

" महवर्णं वस्त्रयुग्मं तद्वर्णं गंधपुष्पकं। आप्यायस्वेति मंत्रेण सवितापश्चात्तयैव च॥

" उपचारैः समाराध्य ततो होमं समाचरेत्। कृत्वा वह्निं प्रतिष्ठाप्य क्रतुसंकल्पमीदृशं॥

२५ " आयुरारोग्यसिध्यर्थं सर्वारिष्टप्रशांतये। पुत्रस्य दर्शजननदोषनिर्हरणाय च॥

" मातापित्रोः कुमारस्य सर्वारिष्टप्रशांतये। तेषामायुः श्रियं चैव शांतिहोमं करोम्यहं॥

" समिधश्च चरुद्रव्यं क्रमेण जुहुयात्कृती। हुनेत्सवितृमंत्रेण सोमो धेनुं च मंत्रतः॥

" एतैर्मंत्रैश्च प्रत्येकं हुनेदष्टोत्तरं शतं। दर्शस्य देवताहोम अष्टाविंशतिसंख्यया॥

" होममेवं तु कृत्वाऽथ कुर्याद्धाराभिषेचनं। श्रीसूक्तमायुष्यसूक्तं च समुद्रज्येष्ठ इत्यृचा॥

३० " एतैर्मंत्रैरभिषेकं मातापित्रोः शिशोस्तथा। ततः स्विष्टकृतं दद्याद्धोमशेषं समापयेत्॥

" हिरण्यं रजतं चैव कृष्णां धेनुं सदक्षिणां। अन्येभ्योऽपि यथाशक्त्या दातव्या दक्षिणा तथा॥

" ब्राह्मणान् भोजयेदत्र कारयेत्स्वस्तिवाचनं।"

इति दर्शजननशांतिः॥

---

१ ऋ. सं. १।६।१५। २ ऋ. सं. ८।२।१९। ३ ऋ सं ८।४।१७। ४ ऋ. सं. १।३।२६। ५ ऋ. सं. ५।४।३०। ६ ऋ. सं. ७।६।५। ७ ऋ. सं. ३।६।२४। ८ ऋ सं. ५।४।१६। ९ इ–षसवेत च। १० ऋ. सं. १।६।२२।

" कुहूप्रसूतिरत्यर्थं सर्वदोषकरी स्मृता । यस्य प्रसूतिरेतेषां तस्यायुर्धननाशनं ॥
" सर्वगंडसमस्तत्र दोषस्तु प्रबलो भवेत् । तत्र शांतिविशेषेण परित्यागो विधीयते ॥
" परित्यागात्तत्र शांतिं कुर्याद्धीमान्विचक्षणः" । परित्यागादिति ल्यब्लोपे पंचमी। परित्यागं कृत्वेत्यर्थः ।
" तत्कालं तत्क्षणार्द्धेन पुनरेवानुलेपनं । न त्यजेत्पंडितो मोहाद्दर्पादज्ञानतोऽपि वा ॥ ५
" तद्योगं नाशयेत्किंचित्स्वयं वा नाशमश्नुते । कल्पोक्तशांतिः कर्त्तव्या शीघ्रं दोषापनुत्तये ॥
" रुद्रः शक्रश्च पितरः पूज्याः स्युर्देवताः क्रमात् । कर्षमात्रसुवर्णेन तदर्द्धार्द्धेन वा पुनः ॥
" अथवा शक्तितः कुर्याद्वित्तशाठ्यविवर्जितः ॥
" प्रतिमां कारयेच्छंभोश्चतुर्भुजसमन्वितां । त्रिशूलखड्गवरदाभयहस्तां यथाक्रम ॥
" श्वेतपुष्पांबरधरां श्वेतांबरवृषस्थितां । त्रियंबकेन मंत्रेण पूजां कुर्याद्यथाविधि ॥ १०
" इंद्रश्चतुर्भुजो वज्रांकुशचापः ससायकः । रक्तवर्णो गजारूढो यत इंद्रेति मंत्रतः ॥
" पितरः कृष्णवर्णाश्च चतुर्हस्ता विमानगाः । गदाक्षसूत्रकमंडल्वभयस्यैव धारिणः ॥
" ये सत्या इति मंत्रेण पूजां कुर्यादनंतरं । आग्नेयीदिशमारभ्य कुंभान्कोणेषु विन्यसेत् ॥"
ये सत्यासो हविरद इत्यादि मंत्र ऋग्वेदे प्रसिद्धः ।
" तन्मध्ये स्थापयेत्कुंभं शतछिद्रसमन्वितं । निक्षिपेत्पंचगव्यादींस्तत्तन्मंत्रैश्च निक्षिपेत् ॥ १५
" कल्पोक्तशांतिः कर्त्तव्या कुर्याच्छीघ्रं स्वशक्तितः । गोदानं वस्त्रदानं च सुवर्णं सोर्वरां शुभां ॥
" दश दानानि चोक्तानि क्षीरमाज्यं गुडं तथा । आज्यावेक्षणपात्राणि तत्तन्मंत्रैश्च कारयेत् ॥
" समिदाज्यं च होमं च तिलहोमं च सर्षपैः । अश्वत्थप्लक्षपालाशसमिद्भिः खादिरैः शुभैः ॥
" अष्टोत्तरशतं मुख्यं प्रत्येकं जुहुयाद्द्विजः । त्र्यंबकेन मंत्रेण तिलान् व्याहृतीभिः पुनः ॥
" चतुर्भिः कलशैर्युक्तं बृहत्कुंभसमन्वितम् । शांतिवत्सकलं कार्यमभिषेकं च कारयेत् ॥" २०
शांतिवत्पूर्वोक्तशांतिवत् ।
" मातापितृशिशूनां च अभिषिंचेत्तु वारुणैः । शंकरस्याभिषेकं च कुर्याद्ब्राह्मणभोजनम् ॥
" अन्येषां चैव सर्वेषां ब्राह्मणानां च तर्पणं । यथाशक्त्यनुसारेण द्विजवाचनपूर्वकं ॥"

अथ प्रयोगः ।

तत्र चतुर्दश्याः षडंशेषु द्वितीयतृतीयषष्ठांशेषु जन्म चेद्गोमुखप्रसवोऽपि कार्यः । कर्त्ता मासपक्षाद्यु- २५ ल्लिख्यास्य शिशोश्चतुर्दश्याद्यभागादिषु सिनीवाल्यां कुह्वां वोत्पत्त्या सूचितस्यानिष्टस्य निरासार्थं शांतिं करिष्य इति संकल्प्य गणेशपूजास्वस्तिवाचनमातृपूजावृद्धिश्राद्धाचार्यादिवरणानि कुर्यात् । तत आचार्यः सर्षपाद्विकिरणादि कृत्वा पीठादौ वरदाभयहस्तां वृषस्थां हैमीं रुद्रप्रतिमां त्र्यंबकमंत्रेण संपूजयेत् । सिनीवालीकुह्वोस्तु रुद्रेंद्रपितरः । तत्र रुद्र ईशानोऽत्र्यंकरक्रमात्त्रिशूल- खड्गवरदाभयहस्तो वृषस्थः त्र्यंबकमंत्रेण । इंद्रो वज्रांकुशधनुः सायको रक्तो गजस्थो यत इंद्रेति ३० मंत्रेण पितरः कृष्णवर्णा गदाक्षसूत्रकमंडल्वभयकरा विमानस्था ये सत्या इति मंत्रेण पूज्या इति विशेषः । ततस्तत्प्राच्यामीशान्यामुदीच्यां वाग्नेय्यादिषु चतुरः कुंभान् मध्ये च शतछिद्रं संस्थाप्य तेषु पंचमृत्पंचरत्नपंचत्वक्पंचपल्लवधान्यानि सुवर्णं सर्वौषधींश्च क्षिप्त्वा श्वेतवस्त्रमाल्याभिरावेष्ट्य सर्वे समुद्रा इत्यभिमृश्य इमं मे वरुण तत्त्वायामि त्वन्नो अग्ने स त्वन्न इति क्रमेण वरुणमावाह्य

१ छ-वात्यर्थं । २ [illegible] ५।११८ । ३ झ-चे । ४ ऋ. सं. ५।१।१० । ५ ऋ. सं. ६।४।३८ । ६ ऋ. सं. १।२।१९ । ७ ऋ. [illegible] ८ ऋ. सं. ३।[illegible] ।

अत्र सिनीवालीकुह्वोर्दर्शे चोक्तयोः शांत्योर्व्यवस्थोक्ता छंदोगपरिशिष्टभाष्ये 'चतुर्दश्या अंत्योः मायाश्चाष्टाविति' नव प्रहराश्चंद्रक्षयकालः ।
"चतुर्दश्यष्टमे यामे क्षीणो भवति चन्द्रमाः । अमावास्याष्टमे यामे पुनः किल भवेदणुरिति" वाक्यात् ।
"अत्रेंदुराद्ये प्रहरेऽवतिष्ठते । चतुर्थभागोन कलावशिष्टः ॥ तदंत एव क्षयमेति कृत्स्नं । एवं- ज्योतिश्चक्रविदो वदंतीति" च वाक्यात् । अत्र चतुर्दश्यंत्यामाद्ययामयोरणुश्चंद्रः शास्त्रस्य ५
चक्षुषोर्वा गोचरो भवति स कालो दृष्टचंद्रत्वात्सिनीवाली । अमांत्योपांत्ययामयोः शास्त्रचक्षुषो- रगोचर इति क्षीणश्चंद्रः स कालः कुहूर्मध्यमाः पंचयामा दर्श इति व्यवस्थया शांतिव्यवस्थेति ।

परे तु चतुर्दशीमात्रयुक्तेऽहोरात्रे वर्त्तिन्यमा सिनीवाली प्रतिपन्मात्रयुतेति कुहूः । वार- त्रयस्पर्शिमध्यमाहोरात्रवर्त्तिन्यमा दर्शः । तस्मिन्चतुर्दशीप्रतिपदोरभावेनोभयलक्षणानाक्रांतत्वात् । तयोऽसंभवती चामा दर्शः । केवलचतुर्दशीकेवलप्रतिपद्युक्तत्वाभावात् । अतस्त्रिस्पर्शिन्याममत्यां १०
वा सिनीवाली कुहूशांतिप्राप्त्यभावाद्दर्शशांतिप्राप्तिरिति युक्तमाहुः ।

## अथ दर्शजननशांतिप्रयोगः ।

कर्त्ताऽस्य कुमारस्य कुमार्या वा दर्शजन्मसूचितानिष्टनिवृत्त्यर्थं शांतिं करिष्य इति संकल्प्य गणेशपूजास्वस्तिवाचनाचार्यादिवरणानि कुर्यात् । अथाचार्यः सर्षपविकिरणप्रोक्षणादि कृत्वा शुद्धभूमौ जलपूर्णं पंचगव्यपल्लवत्वक् रत्नयुतं वासोयुग्मवेष्टितं कुंभं धान्योपरि संस्थाप्य सर्वे १५
समुद्रा इति तीर्थान्यावाह्यापो हिष्ठेति तृचेन कया नश्चित्र इत्यृचा यत्किंचेदमित्यृचा समुद्रज्येष्ठा इति तृचेन चाभिमंत्र्य तन्नैऋत्यदेशे पंचरंगरंजितैस्तुंडलैः सर्वतोभद्रं कृत्वा तत्र स्वर्णप्रतिमयोर्ये सत्यास इति पितृन् तद्दक्षिणे रूप्यप्रतिमायामाप्यायस्वेति सोमं तदुत्तरे ताम्रप्रतिमायां सविता पश्चात्तादिति सूर्यं चावाह्य संपूज्य

"आयुरारोग्यसिद्ध्यर्थं सर्वारिष्टप्रशांतये । तेषामायुः श्रिये चैव शांतिहोमं करोम्यहम्" इत्युक्त्वा २०
तत्पश्चिमे कुंडे स्थंडिले वाऽग्निं प्रतिष्ठाप्य तदीशान्यां ग्रहान्संपूज्याऽन्वाधानआघारावाज्येने- त्युक्त्वा पितृन् समिच्चरुभ्यामष्टाविंशतिवारं सोमं सूर्यं वाऽष्टोत्तरशतवारं शेषेणोदपात्राज्यभागांते- ऽन्वाधानक्रमेण पूजामंत्रैर्हुत्वा मातापितृशिशून् हिरण्यवर्णामिति पंचदशर्चेनायुष्यं वर्चस्यमिति दशर्चेन समुद्रज्येष्ठा इत्यृचा च जलधारयाऽभिषिच्य स्विष्टकृदादि समापयेत् । यज- मानो बलिदानपूर्णाहुत्यंते हेमरूप्यकृष्णधेनूराचार्याय ऋत्विग्भ्यश्च यथाशक्ति दक्षिणां दत्वा २५
विप्रान्संभोज्य स्वस्तिवाचनं कुर्यादिति दर्शशांतिः ।

## अथ ज्येष्ठाशांतिः ।

घटिकैका च मैत्रांते ज्येष्ठादौ घटिकाद्वयं । तयोः संधिरिति ज्ञेयं शिशुगंडं समीरितं ॥
प्रथमे च द्वितीये च ज्येष्ठर्क्षे च तृतीयके । पादत्रये जातनरो ज्येष्ठोऽप्यत्र प्रजायते ॥
ज्येष्ठांत्यपादजातस्तु पितुः स्वस्य विनाशकः । जायते नात्र संदेहो दशाहाभ्यंतरे तथा ॥ ३०
ज्येष्ठर्क्षे कन्यका जाता हंति शीघ्रं धवाग्रजं । तच्छांतिं तस्य वक्ष्यामि गंडदोषप्रशांतये ॥
सुदिने शुभनक्षत्रे चंद्रताराबलान्विते । सूतकांते तथा कुर्याज्ज्येष्ठाशांतिं विधानतः ॥

---

१ छा–गो । २ ह–भवती वा अमादर्शः

वज्रांकुशधरं देवं ऐरावतगजान्वितं । कुर्याच्छचीपतिं रम्यं देवेंद्रं सुरनायकं ॥
कर्षमात्रसुवर्णेन कर्षार्द्धेनाथ पादतः । तद्विधानं प्रकुर्वीत वित्तशाठ्यं न कारयेत् ॥
शालितंडुलसंपूर्णं कुंभस्योपरि पूजयेत् । इंद्रायेंद्रो मरुत्वत इति मंत्रेण वाग्यतः ॥
गंधपुष्पैर्धूपदीपैर्नानामक्ष्यनिवेदनैः । पूजयेद्विधिना विप्रलोकपालगणान्वितं ॥
५ रक्तवस्त्रद्वयोपेतं पूजयेत्सुरनायकं । तत्र संस्थापयेत्कुंभांश्चतुर्दिक्षु विशेषतः ॥
तन्मध्ये स्थापयेत्कुंभं शतच्छिद्रसमन्वितं । पुण्योदकसमायुक्तान्वस्त्रयुग्मेन वेष्टितान् ॥
कुंभेषु विन्यसेद्धीमान् पंचगव्यं समंत्रकं । पंचामृतं पंचरत्नं मृत्तिकाः पंचसंख्यकाः ॥
पंचवृक्षकषायांश्च पंचपल्लवकांस्तथा । सुवर्णकुशदूर्वांश्च शतौषधि विनिक्षिपेत् ॥
पूजयेद्वारुणैर्मंत्रैः कुंभान् धीमान् प्रयत्नतः । त्वन्नो अग्ने जपेदादौ स त्वन्नोपि द्वितीयकम् ॥
१० समुद्रज्येष्ठा इति च इमं मे गंगे चतुर्थकं ॥

पूजयेद्वस्त्रयुग्माढ्यैश्चतुरः कलशानपि । जपं कुर्युः प्रयत्नेन मंत्रैरेभिर्द्विजोत्तमाः ॥
आ नो भद्रा जपं चादौ भद्रा अग्ने द्वितीयकं । इंद्रसूक्तं रुद्रजाप्यं जपं मृत्युंजयं ततः ॥
इत्थं संपूज्य देवेशं वरुणं कुंभसंस्थितं । सुसंकल्पविधानेन होमकर्म ततश्चरेत् ॥
समिद्भिर्ब्रह्मवृक्षस्य शतमष्टोत्तरं तथा । सर्पिषा चरुणा चैव मूलमंत्रेण वाग्यतः ॥
१५ हुनेज्जाप्यं च तेनैव यत इंद्र भयेति च । तिलान्व्याहृतिभिर्हुत्वा शतमष्टोत्तरं पृथक् ॥
भार्याशिशुसमोपेतं यजमानं विशेषतः । अभिषेकं प्रकुर्वीत सूक्तैर्वारुणसंज्ञितैः ।
समुद्रज्येष्ठादिभिर्मंत्रैरिमं मे वरुणस्तथा । द्यौः शांत्येत्यादिभिर्मंत्रैरभिषेकं समाचरेत् ॥
अभिषेकनिवृत्तौ तु यजमानः समाहितः । शुक्लांबराणि धृत्वाऽथ कुर्यादाज्यावलोकनं ॥
रूपं रूपेति मंत्रेण चित्रं देवानामुदगादनीकं चक्षुरेव च । देवतापुरतः स्थित्वा धूपदीपनिवेदनं ॥
२० दद्याच्चाचमनं सम्यक् तांबूलार्घ्यं तथैव च ।
" नमस्ते सुरनाथाय नमस्तुभ्यं शचीपते । गृहाणार्घ्यं मया दत्तं गंडदोषप्रशांतये ॥ "
कार्यं तत्पूजकादीनां कारितं यत्फलं शुभं । लब्ध्वा तु तत्फलं सर्वं देवेंद्राय समर्पयेत् ॥
आचार्याय च गां दद्यात्सुशीलां च पयस्विनीं । रक्तवर्णां वस्त्रयुतां सर्वालंकारभूषितां ।
वस्त्रयुग्माभिधानां च यथाविभवसारतः ।
२५ " यक्षगंधर्वसिद्धैश्च पूजितोऽसि शचीपते । दानेनानेन देवेश गंडदोषं विनाशय ॥ "
अष्टोत्तरशतं संख्यां कुर्याद्ब्राह्मणभोजनम् । तेभ्योऽपि दक्षिणां दत्त्वा प्रणिपत्य क्षमापयेत् ॥
इमां कृत्वा ज्येष्ठाशांतिं यथाविध्युक्तमार्गतः । गंडदोषं विनिर्जित्य आयुष्मान् जायते नरः ॥
इत्युक्तं वृद्धगार्ग्येण शौनकाय विशेषतः । ज्येष्ठानक्षत्रसंभूतगंडदोषप्रशांतये ॥
अज्ञानाद्वाऽथ वा ज्ञानाद्विकल्पाद्वा नरस्य च । यन्न्यूनमतिरिक्तं वा तत्सर्वं क्षंतुमर्हसि ॥

---

१ ऋ. सं. ३।४।१२ । २ ऋ. सं. ५।४।१६ । ३ ऋ. सं. ८।३।६ । ४ ऋ. सं. १।६।१५ । ५ ह—जपेदादौ । ६ ऋ. सं. ८।२।१९ । ७ ऋ. सं. ६।४।३८ । ८ ऋ. सं. १।२।१९ । ९ ऋ. सं. ४।७।३२ । १० ऋ. सं. १।८।७ । ११ ऋ. सं. ५।५।११ । १२ ह—दोषोपशांतये १३ घक्षरनअदृय—जप्त्वा ।

## अथ प्रयोगः ॥

गोमुखप्रसवं कृत्वा 'अस्य शिशोर्ज्येष्ठाजननसूचितसकलारिष्टनिरसनद्वारा श्रीपरमेश्वरप्रीत्यर्थं शांतिं करिष्ये' इति संकल्प्य गणपतिपूजनपुण्याहवाचननांदीश्राद्धाचार्यर्त्विक्चतुष्टयवरणानि कुर्यात् । तत आचार्यः सर्षपविकिरणभूमिप्रोक्षणे कृत्वा महीं द्यौरित्यादिविधिना शालितंडुलपूर्णे कुंभं संस्थाप्य पूर्णपात्रोपरि हैमीमिंद्रप्रतिमां इंद्रायेंद्रो मरुत्वत इति मंत्रेण ५
रक्तवस्त्रद्वयेन गंधादिभिश्च वाग्यतः पूजयेत् । तत इंद्रभिन्नान् लोकपालान् समंतादावाह्य पूजयेत् । ततः पूर्वादिदिक्षु चतुरः कुंभान् मध्ये शतच्छिद्रं पुण्योदकवस्त्रमाल्ययुतं संस्थाप्य दिक्कुंभेषु पंचगव्यपंचामृतपंचरत्नपंचमृत्तिकापंचवृक्षकषायपंचपल्लवसुवर्णकुशदूर्वा शतौषधीश्च दत्वा पूर्वकलशे त्वन्नो अग्न इति स त्वन्नो अग्न इति दक्षिणे समुद्रज्येष्ठा इति पश्चिमे इमं मे गंगे इत्युत्तरे च वरुणमावाह्य वस्त्रपुष्पाद्यैः पूजयेत् । ततश्चत्वार ऋत्विजः आ नो भद्रा भद्रं १०
अग्ने पुरुषसूक्तं कद्रुद्रायेति सूक्तानि जपेयुः । आचार्यो मूलमंत्रं इंद्रं विश्वा अवीवृधन्नित्यष्टर्चं इंद्रसूक्तं रुद्रं मृत्युंजयं च जपेत् । ततोऽग्निं ग्रहांश्च प्रतिष्ठाप्यान्वादध्यात् । अत्र प्रधानमिंद्रं पलाशसमिदाज्यचरुद्रव्यैरष्टशतसंख्यया अष्टसहस्रसंख्यया वा प्रजापतिं तिलद्रव्येणाष्टशतसंख्यया व्याहृतिभिः शेषेण स्विष्टकृतमित्यादि कल्पयेत् पूर्णाहुतिं पूर्णपात्रविमोकं च कृत्वा सभार्यं सशिशुं यजमानं वारुणैः सूक्तैः समुद्रज्येष्ठा इमं मे वरुण द्यौः शांतेत्यादिभिरभिषिंचेत् । न तो रूपं १५
रूपमित्याज्यमवलोक्य तत्पात्रं सदक्षिणं ब्राह्मणाय दत्वा इंद्रं संपूज्य

"नमस्ते सुरनाथाय नमस्तुभ्यं शचीपते । गृहाणार्घ्यं मया दत्तं गंडदोषप्रशांतये ॥" इत्यर्घं दत्वाऽऽचार्यर्त्विगादिभ्यः श्रेयो गृहीत्वा इंद्राय समर्प्याचार्याय पयस्विनीं गां रक्तवस्त्रद्वयं च दत्वोत्तरपूजांते इंद्रं विसृज्य प्रतिमां

"यक्षगंधर्वसिद्धैश्च पूजितोऽसि शचीपते । दानेनानेन देवेश गंडदोषं विनाशय ॥ २०
"अज्ञानाद्वाऽथ वा ज्ञानाद्विकल्पाद्वा धनस्य च । यन्न्यूनमतिरिक्तं वा तत्सर्वं क्षंतुमर्हसीति ॥"

मंत्रेणाचार्यायैव दत्वा ऋत्विग्भ्योऽपि यथाशक्ति दत्वाऽग्निं विसृज्याष्टशतं ब्राह्मणान् भोजयेत् ।

इति ज्येष्ठाशांतिः ।

## अथ मूलशांतिः ॥

शौनकः २५

"अथातः संप्रवक्ष्यामि मूलजातहिताय वै । मातापित्रोर्धनस्यापि कुलज्ञातिहिताय च ॥
"त्यागो वा मूलजातस्य स्यादष्टाब्दात्प्रदर्शनं । अभुक्तमूलजातानां परित्यागो विधीयते ॥
"अदर्शनाद्वाऽपि पितुः स [illegible] तिष्ठेत्समाष्टकं । एवं दुहितरि प्रोक्ते मूलजायां फलं बुधैः ॥"

कन्यायां तु विशेषः ।

---

१ ऋ. सं. १।२।६ । २ ऋ. सं. ७।१।४० । इत—इमं मे वरुण इति पश्चिमे सत्वायामीत्युत्तरे । ३ ऋ. सं. ३।४।१२ । ४ ऋ. सं. ५।४.१६ । ५ ऋ. सं. ८।३।६ । ६ ऋ. सं. १।६।१५ । ७ ऋ. सं. ८।४।७ । ८ ऋ. सं. ११।२।२६ । १० ऋ. सं. १।१।२१ । ११ ऋ. सं. ५।८।१६ । १२ ऋ. सं. १।२।१९ । १३ ऋ. सं. ४।७।२२ ।

" न बाला हंति मूलर्क्षे पितरं मातरं तथा । मूलजा श्वशुरं हंति व्यालजा च तदंगनां ॥
" माहेंद्रजाऽग्रजं हंति देवरं च द्विदैवजा ।" व्याल आश्लेषा । माहेंद्रं ज्येष्ठा । द्विदैवं विशाखा ।
" शांतिर्वा पुष्कला चेत्स्यात्तर्हि दोषो न कश्चनेति ।" "मुख्यकाले प्रवक्ष्यामि शांतिहोमजपं ततः ॥
" जातस्य द्वादशाहे च जन्मर्क्षे वा शुभे दिने । समाष्टके द्वादशाब्दे कुर्याच्छांतिकमादरात् ॥
५ " यदैव शांतिकं कुर्यात्कर्म तत्र प्रचक्ष्महे । संस्कृते पुण्यदेशे तु मंडपं कारयेद् बुधः ॥
" पुण्यैर्निर्मलैस्त्रिभिस्तोयैः प्रोक्षितायां क्षितौ ततः । तत्रोदकुंभं सुश्लक्ष्णं रक्तं व्रणविवर्जितं ॥
" सुवर्तुलं च निर्णिक्तं पूरयेन्निर्मलांभसा । वस्त्रावगुंठितं कुर्यात्पूरयेत्तीर्थवारिणा ॥
" कुर्वं हेमसमायुक्तं चूतपल्लवसंयुतं । स्वस्तिकोपरि विन्यस्य सक्षीरद्रुमपल्लवैः ॥
" द्रोणं व्रीहींश्च निक्षिप्य ईशाने च निधापयेत् । पंचरत्नानि निक्षिप्य सर्वौषधिसमन्वितं ॥
१० " अर्चितं पुष्पगंधाद्यैः श्रीरुद्रं च पृथग्जपेत् । षडंगसहितं सम्यक् जपेद्वै रुद्रसंख्यया ॥
" बह्वृचा रुद्रसूक्तैर्वा छंदोगारुद्रसामभिः ।" सूक्तानि सामानि च त्रीण्येव । कपिंजलन्यायात् ।
" एकादशाष्टत्रियेकसंख्यया शक्तितो जपेत् । तत्राप्रतिरथं सूक्तं शतरुद्रानुवाककं ॥
" रुद्रानुवाकं तथा पुण्यं रक्षोघ्नं च स्पृशन्जपेत् । त्र्यंबकं जपेत्सम्यक् अष्टोत्तरसहस्रकं ॥
" एकवारं तथा चापि पावमानीः[1] स्पृशन् जपेत् । जपस्य पंच कुंभाः स्युर्द्वयं वा तदलाभतः ॥
१५ " श्रीरुद्रस्यैककुंभश्च सर्वसूक्तानि तत्र तु । तथान्यं च शुभं कुंभं पूर्वोक्तैर्लक्षणैर्युतं ।
" चतुःप्रस्रवणं कुर्यात्पंचवक्त्रं तु तद्भवेत् ।" अत्रायं सांप्रदायिकोऽर्थः । आद्यपक्षे पद्कुंभाः । एको रुद्रस्य । तस्मिन् शतरुद्रियं रुद्रसूक्तानि सामानि वा जप्यानि । अभिषेकार्थं पंचकुंभाः । तत्र पूर्वादिकुंभचतुष्टये तत्राप्रतिरथमित्यादिना क्रमात्सूक्तचतुष्टयविधिः । मध्ये च त्र्यंबकमंत्रपावमानीजपविधिः । एवं पंचकुंभाशक्तौ चतुःप्रस्रवण एक एव । द्वयमिति द्वित्वं तु रुद्रकुंभमादाय । अत एव श्रीरुद्रस्येति
२० श्लोकार्धेन रुद्रकुंभ एव पूर्वोक्तो द्वित्वसंख्यापूरणायानूद्यते । चतुःप्रस्रवण एव तु पंचकुंभस्थाने विधीयते । एवं पंचवक्त्रं तु तद्भवेदिति पंचवक्त्रोक्तिरपि पंचकुंभस्थानापत्त्या संगच्छते ।
" वस्त्रावगुंठितं कुर्यात्पूरयेत्तीर्थवारिणा । पंचरत्नसमायुक्तमाम्रपल्लवसंयुतं ॥
" गजाश्वरथ्यावल्मीकात्संगमाद्ध्रदगोकुलात् । राजद्वारप्रदेशाच्च मृदमानीय निक्षिपेत् ॥
" कुंभस्य नैर्ऋते देशे होमदेशं प्रकल्पयेत् । गोमयालेपिते देशे कुर्यात्स्थंडिलमुत्तमं ॥
२५ " कृत्वाग्निमुखपर्यंतमुल्लेखादिस्वशाकितः । पूर्णपात्रनिधानांतं कृत्वा पूजां समाचरेत् ॥
" नक्षत्रदेवतारूपं सुवर्णेन प्रयत्नतः । निष्कमात्रेण वाऽर्धेन पादेनाथ स्वशक्तितः ॥
" प्रतिमां लक्षणोपेतां कारयित्वा विचक्षणः । यद्वा मूलं सुवर्णस्य स्थापयित्वा प्रपूजयेत् ॥
" मूलं मूलाकारं मूल्यमिति क्वचित्पाठः । तदा प्रतिमामूल्यमित्यर्थः ॥
" सुवर्णं सर्वत्रैवत्यं सर्वदेवात्मकोऽनलः । सर्वदेवात्मको विप्रः सर्वदेवमयो हरिः ॥

---

१ भक्ष्यर्हमकश्चनयत्नु—नास्ति । २ ख—नी; घरनी । ३ ख—दायता ।

" संस्मरेन्निर्ऋतिं श्यामं सुमुखं नरवाहनं । रक्षोधिपं खड्गहस्तं दिव्याभरणभूषितं ॥
" प्रतिमापूजनार्थाय वस्त्रयुग्मं प्रकल्पयेत् । पंकजं कारयेद्भूमौ रक्ताभैर्व्रीहितंडुलैः ॥
" चतुर्विंशद्दलोपेतं शुक्लैर्वा कर्णिकान्वितं । तस्योपरि न्यसेत्पात्रं स्वर्णं वा रौप्यमृन्मयं ॥
" शुद्धवस्त्रेण संछाद्य तत्र मूलानि निक्षिपेत् " । मूलानि शतमूलानि तानि च वक्ष्यंते ।
" स्वयमुत्पाटयेत्प्राज्ञो मूलानां च शतं पिता । मंगल्याश्च पवित्राश्च ओषध्यः कथयाम्यहं ॥ ५
" लक्ष्मणा शतमूला च शिरीषो वेतसस्तथा । सहाका श्वेतमूला च विष्णुक्रांताऽथ शंखिनी ॥
" सर्पाक्षी मीननेत्रा च पुत्रयाची कृतांजली । पालाशो बिल्वकश्चैव रोचना चंदनद्वयं ॥
" कृष्णमांसी मुरोशीरं वालकं च तथामली । गोजिव्हा तुलसी दूर्वा शतपुष्पी सलांगली ॥
" ब्रह्मदंडी द्रोणपुष्पी प्रियंगुः सितसर्षपाः । पिप्पली काकजंघा च त्रायमाणा हहुस्तथा ॥
" ज्योतिष्मती च गंधारी निर्गुंधा पूर्णकोशिका । भगक्षमा सुभद्रा च गुडूची सेंद्रवारुणी ॥ १०
" अलंबुकाऽरिंदंती च कदली केतकी तथा । गोक्षुरं शतपर्वा च अरिष्टिकाऽपराजिता ॥
" छिन्नरुह्या शतपर्वा निकुंभा च सुवर्चला । अश्वगंधा हस्तिकर्णा हरिद्राद्वितयं तथा ॥
" उडूवो मधुकारश्च अश्वत्थो बकुलस्तथा । सर्पक्षीरा ह्यपामार्गो मंदारश्चातिमुक्तकः ॥
" मालती स्वर्णपुष्पा च श्रीपर्णी श्रीफलं तथा । दर्भमूलं करवीरं मद्यंती विकंकतः ॥
" पाटलासुरदारुश्च अर्द्धसूदनिकस्तथा । फलं मन्मथवृक्षस्य पलाशस्य च पल्लवाः ॥ १५
" राजानद्वीवृक्षमूलं सुरदारुविदारिका । श्वेतवीर्या श्वेतपाका नीलोत्पलं तथैव च ॥
" नागकेसरमंदारौ कुमारी चैव निक्षिपेत् । तीर्थांबु पंचगव्यं च सर्वौषध्यश्च कांचनं ॥
" यथासंभवतो वापि ग्राह्यं मूलं शतं शुभं । वीरस्वचासमेतं च शतछिद्रे घटे न्यसेत् ॥ "
शतमूला शतावरी । वेतसो वंजुलः । सहका सहदेवी । श्वेतमूला पुनर्नवा । मीननेत्रा मत्स्याक्षी ॥
पुत्रपारा पुत्रजीवा । कृतांजली अंजलिनी । हाथा जोडी इति प्रसिद्धा । बिल्वको बिल्वः । चंदनद्वयं २०
श्वेतं पीतं च । आमलाभूम्यामलकी । गोजिव्हा गजजिंभीति प्रसिद्धा । लांगली कलिहारीति
प्रसिद्धा । ब्रह्मदंडी अधःपुष्पी । द्रोणपुष्पी कांबुकः । काकजंघा काकांगी । ज्योतिष्मती कंगुली ।
गांधारी देवगांधारी । पूर्णकोशिका कोशातकी । भगक्षमा शिग्रुः । सुभद्रा सारिका । अलंबुका
तुंबी । विशालपर्वा वचा । अरिष्टिका नागवला । छिन्नरुहा पिंडगुडूची । शतपत्रा कमलिनी । निकुंभा
दंतीभेदः । सुवर्चला सूर्यभक्ता । हस्तिकर्णा एरंडः । उडूवः पीलुः । मधुकारो मधूकः । सर्जरा २५
बीजकः । अतिमुक्तको माधवी । मालती जाती । स्वर्णपुष्पा कुसली । श्रीफलं बिल्वं । मदयंती
यूथिका । विकंकतः स्रुववृक्षः । अर्द्धसूदनिका पाठव्यौ । मन्मथवृक्ष आम्रः । सुरदारुर्देवदारुः ।
विदारिका भूकूष्मांडी । श्वेतवीर्या गिरिकर्णी । श्वेतपाका गुंजा । शेषाणि स्पष्टानि ।
" विष्णुक्रांता सहदेवी तुलसी च शतावरी । मूलानीमानि गृह्णीयाच्छनाभावे विशेषतः ॥
" स्थापयेत्कर्णिकामध्ये वस्त्रगंधाद्यलंकृतं । कूर्चहेमजलोपेतं कुंकुमौषधिसंयुक्तं ॥ ३०

---

१ ह-संस्थाप्य । २ ह-याची घ-पुत्रयाची । ३अ-पुत्रयाची । ३ ह-रम्भा । ४ खरयदहक-भल्लाः ह-तमालश्री । ५क्षट-रिंदंती ६ क्ष-रम्या । ७ ह-दारमिंदरी । ८क्षठ-चीर; दयव-धीर । ९ ह-तल' १० ह-त्रिभीति । ११ ह-ष्मी । १२ ह-सा । १३ह-खाद्या; अदयदहलघ-ष्टेषा १४ ह-स्म ट-रोम

" कुंभोपरि न्यसेद्विद्वान्मूलं नक्षत्रदैवतं । अधिप्रत्यधिदेवौ च दक्षिणोत्तरदेशयोः ॥
" अधिदेवं यजेदादौ ज्येष्ठानक्षत्रदैवतम् । उत्तराषाढऋक्षादि अनुराधांतमर्चयेत् ॥
" ऐंद्रादीशानपर्यंतं पूजयेत्स्वस्वनामतः । स्वलिंगोक्तैश्च मंत्रैश्च प्रधानादीन्प्रपूजयेत् ।
" पंचामृतेन संस्नाप्य आवाह्याय समर्चयेत् । उपचारैः षोडशभिर्यद्वा पंचोपचारकैः ॥
५ " रक्तचंदनगंधाद्यैः पुष्पैः कृष्णासितादिभिः । मेषशृंगादिधूपैश्च घृतदीपैस्तथैव च ॥
" सुरापोलिकमांसाद्यैर्नैवेद्यैरोदनादिभिः । मत्स्यमांससुरादीनि ब्राह्मणानां विवर्जयेत् ॥
" सुरास्थाने प्रदातव्यं क्षीरं सैंधवमिश्रितं । पायसं लवणोपेतं मांसस्थाने प्रकल्पयेत् ॥
" उक्तगंधाद्यलाभे तु यथालाभं समर्चयेत् । पुष्पांतं तु समभ्यर्च्य होमं कुर्याद्यथोदितं ॥
" निर्वापप्रोक्षणादीनि चरोः कुर्याद्यथाविधि । हविर्गृहीत्वा विधिवन्मैऋत्यैव ऋचा हुनेत् ॥
१० " मोषुणः परापरेति या ते देवीति वा पुनः । पायसं घृतसंमिश्रं हुनेदष्टोत्तरं शतं ॥
" समिदाज्यचरून्पश्चादष्टोत्तरशतं संख्यया हुनेत् । अधिदैवतयोश्चापि जुहुयात्स्वस्वमंत्रतः ॥
" चतुर्थ्यंतैर्नमोंतैश्च स्वाहांतैः स्वस्वमंत्रकैः । नक्षत्रदेवताभ्यश्च पायसेन तु होमयेत् ॥
" कृणुष्वेति पंचदशभिर्जुहुयात् कृशरं ततः । गोधेऽभ्या जातवेदसे त्र्यंबकमिति क्रमात्[1]॥
" सीरा युंजंति तामग्नि वास्तोष्पतेत्यग्निमेव च । क्षेत्रस्य पतिना गुणांतमग्निं दूतं तथैव च ॥
१५ " श्रीसूक्तेन तथा विद्वान् समिदाज्यचरून् क्रमात् । अष्टोत्तरशतैर्वापि अष्टाविंशतिभिः क्रमात् ।
" अष्टाष्टसंख्यया वापि जुहुयाच्छक्तितो बुधः । त्र्यंबः सोमेन पायसं जुहुयात्तु त्रयोदश ॥
" चतुर्गृहीतमाज्यं च या ते रुद्रेति मंत्रतः । स्रुवेण जुहुयादाज्यं महाव्याहृतिभिः क्रमात् ॥
" हुत्वा स्विष्टकृतं पश्चात्प्रायश्चित्ताहुतीर्हुनेत् । आचार्यो यजमानो वा अग्नौ पूर्णाहुतिं हुनेत् ॥
" समुद्रादिति सूक्तेन प्राजापत्यऋचा तथा । पूर्णादर्वि सप्त ते एतैः पूर्णाहुतिं हुनेत् ॥
२० " होमशेषं समाप्याथ वह्निमारोपयेद्बुधः । कुंभाभिमंत्रणं कुर्याद्दक्षिणेनाभिमर्शयेत् ॥
" मृत्युप्रशमनार्थाय जपेत्त्र्यंबकं शतं । रुद्रकुंभोक्तमार्गेण रुद्रमंत्रं रुद्रशत् जपेत् ॥
• " धूपं दीपं च नैवेद्यं कुंभयुग्मे निवेदयेत् । प्रसादयेत्ततो देवमभिषेकार्थमादरात् ॥
" तस्मिन्काले गृहातिथ्यं कर्तव्य मूर्तिमिच्छता । पृथक् प्रशस्तं तेनैव नक्षत्रेष्टया सहैव च ॥
" अभिषेकविधिं वक्ष्ये पूर्वाचार्यैरुदाहृतं ।
२५ " भद्रासनोपविष्टस्य यजमानस्य ऋत्विजः । दारपुत्रसमेतस्य कुर्युः सर्वेऽभिषेचनं ।
" अग्निर्मूर्धेति सूक्तेन पावमानीभिरेव च । आपो हि ष्ठेति नवभिर्यत इंद्रद्वयेन च ॥
" सहस्राक्षतृचेनापि देवस्य त्वेति मंत्रकैः । शिवसंकल्पमंत्रैश्च वरुणमार्गैश्च मंत्रकैः ।
" योऽसौ वज्रधरो देवो महेंद्रो गजवाहनः । मूलजातशिशोर्दोषं मातापित्रोर्व्यपोहतु ॥
" योऽसौ शक्तिधरो देवो हुतभुङ्मेषवाहनः । सप्तजिह्वः स देवोऽग्निर्मूलदोषं व्यपोहतु ॥
३० " योसौ दंडधरो देवो धर्मो महिषवाहनः । मूलजातशिशोर्दोषं व्यपोहतु यमस्तथा ॥
" योऽसौ खड्गधरो देवो निर्ऋती राक्षसाधिपः । प्रशामयतु मूलोत्थं दोषं बालस्य शांतिदः ॥

१ द्वा-त्या । २ ऋ. सं. ३।१।१६ । ३ ऋ. सं. २।४।२३ । ४ ऋ. ■ ३।४।१० । ५ ऋ. सं. ३।७।७। ६ ऋ. सं. ५।४।३० । ७ ऋ. सं. ८।७।१८ । ८ ऋ. सं. ५।४।२१ । ९ ऋ. सं. ३।८।१ । १० ऋ. सं. ३।४।११। ११ ऋ. सं. ११।२२ । १२ ऋ. सं. ३।८।१० । १३ ऋ. सं. ८।८।२३ । १४ ऋ. सं. ७।६।१५ । १५ ऋ. सं. ६।४।२८।

" योऽसौ पाशधरो देवो वरुणश्च जलेश्वरः । नक्रवाहः प्रचेताख्यो मूलोत्थाघं व्यपोहतु ॥
" योऽसौ देवो जगत्प्राणो मारुतो मृगवाहनः । प्रशामयतु मूलोत्थं दोषं गंडांतसंभवं ॥
" योऽसौ निधिपतिर्देवो गदाभृन्नरवाहनः । मातापित्रोः शिशोश्चैव मूलदोषं व्यपोहतु ॥
" योऽसौ पशुपतिर्देवः पिनाकी वृषवाहनः । आश्लेषामूलगंडांतं दोषमाशु व्यपोहतु ॥
" विघ्नेशः क्षेत्रपो देवो पिनाकी वृषवाहनः । आश्लेषामूलगंडांतं दोषमाशु व्यपोहतु ॥
" सर्वदोषप्रशमनं सर्वे कुर्वंतु शांतिदाः । तच्छ्योरभिषेकं तु सर्वदोषोपशांतिदं ॥
" सर्वकामप्रदं दिव्यं मंगलानां च मंगलं । वस्त्रांतरितकुंभाभ्यां पश्चात्तु तर्पयेद्बुधः ॥
" ततः शुक्लांबरधरः शुक्लमाल्यानुलेपनः । यजमानो दक्षिणाभिस्तोषयेदृत्विगादिकान् ॥
" धेनुं पयस्विनीं दद्यादाचार्याय सवत्सकां । निर्ऋतिप्रतिमां वस्त्रं कुंभं हेम च दापयेत् ॥
" गृहार्थवस्त्रप्रतिमां तत्तद्धोमूश्च दापयेत् ।" महहोतॄषु दापयेदिति क्वचित्पाठः ॥ १०
" श्रीरुद्रजापिने देयः कृष्णोऽनड्वान् प्रयत्नतः । तत्कुंभवस्त्रप्रतिमा तस्मै दद्यात्प्रयत्नतः ॥
" इतरेभ्योऽपि विप्रेभ्यः शक्त्या दद्याच्च दक्षिणां । उक्तालाभे ततो दद्यादाचार्यब्रह्मऋत्विजां ।
" तत्तन्मूल्यं प्रदातव्यं शक्त्या वाऽथ प्रदापयेत् । आचार्याय च यद्दत्तं तदर्द्धं ब्रह्मणे भवेत् ।
" सदस्याय ब्रह्मणोर्द्धं ऋत्विग्भ्यश्च तदर्द्धकं । गृह्णीयादाशिषस्तेभ्यः प्रणम्याथ क्षमापयेत् ।
" दद्यादन्नं पायसादि ब्राह्मणान् भोजयेच्छतं । अलाभे सति पंचाशद्दशकं तदभावतः । १५
" सर्वशांतेश्च पठनं ब्राह्मणैराशिषस्तथा । गृह्य क्षमापयेद्धीमान् निर्ऋतिः प्रीयतामिति ।
" विधाने चरितेऽस्मिंस्तु ततः शांतिर्भवेद्ध्रुवं । गंडांतेष्वेवमेवं स्यात्पुष्याद्येष्वेवमेव तु ।
" समाष्टके द्वादशाहे कुर्याद्वै शांतिमादरात् ।"

## अथ मूलाश्लेषाशांत्योः प्रयोगः

तत्र कर्त्तोक्तकाले मासपक्षाद्युल्लिख्य 'ममास्य शिशोः कुमार्या वा मूलाद्यपादादिजन्माश्लेषाया २० वा जन्मना सूचितपित्राद्यरिष्टशान्त्यर्थं शांतिं करिष्ये' इत्युक्त्वा गणेशपूजनस्वस्तिवाचनमातृका-पूजनाभ्युदयिकानि कृत्वाऽऽचार्यब्रह्मसदस्यान् ऋत्विजश्चाष्टौ षट् चतुरो वा वृत्वा यथाविभव-मर्चयेत् । आचार्य 'आचार्यकर्म करिष्ये' इत्युक्त्वा यदत्र संस्थितमिति सर्षपान्विकीर्यापो हि ष्ठेत्यादि-भिर्भुवं प्रोक्ष्येशान्यां मही द्यौरिति स्पृष्ट्वौषधयः समिति द्रोणपरिमितं व्रीह्यादि क्षिप्त्वाऽऽ-कलशोऽसीति रुद्रकुंभं सस्याप्येमं मे गंगेत्युदकेनापूर्य गंधद्वारामिति गंध या ओषधीरित्योषधीरोषधय २५ समिति यवान् कांडादिति दूर्वा अश्वत्थे व इति पंच पल्लवान् स्योना पृथिवीति सप्त मृदो याः फलिनीरिति फलं स हि रत्नानीति पंचरत्नानि हिरण्यरूप इति हिरण्यं गायत्र्या गोमूत्रं पुनर्मनेति गोमयमाप्यायस्वेति पयः दधिक्राव्णो इति दधि तेजोऽसी-त्याज्यं देवस्य त्वेति कौशं कूर्चं मधु वातेति मधु स्वादुरिति शर्करा क्षिप्त्वा युवा सुवासा इति

१ क्ष—प्र । २ ऋ. सं. ७।६।५ । ३ ऋ. स. १।२।६ । ४ ऋ. स. ८।५।११ । ५ ऋ. स. ६।८।७ ६ ऋ. स. ८।३।६ । ७ ऋ. स. ८।५।८ । ८ ऋ. स. ८।५।११ । ९ ऋ. स. ७।२।२४ । १० ऋ. स. ८।५।८ । ११ ऋ. सं. १।२।६ । १२ ऋ. स. ८।५।१० । १३ ऋ. स. ४।७।२५ । १४ ऋ. स. २।७।२३ । १५ ऋ. स. ३।६।२२ । १६ ऋ. स. ३।७।१२ । १७ ३।१।३ ।

वस्त्रेण सूत्रेण वा कुंभकंठमावेष्ट्य पूर्णादर्विरिति पूर्णपात्रेण पिधाय ततः प्रागुदग्वा चतुर्दिक्षु
चतुरः कुंभान् मध्ये चैकं कुंभं प्रत्येकं मंत्रावृत्त्या पदार्थानुसमयेन जपार्थं संस्थाप्य रुद्रकुंभे
सौवर्णप्रतिमायां त्र्यंबकं वसिष्ठो रुद्रोऽनुष्टुप् रुद्रावाहने विनियोगः । त्र्यंबकेमिति रुद्र-
मावाह्य पूजयेत् । ततो रुद्रकुंभं स्पृष्ट्वैकर्त्विक् याजुषश्चेद्रुद्रैकादशिनी बह्वृचश्चेत्त्रीणि
५ रुद्रसूक्तानि छंदोगश्चेद्रुद्रसामानि जपेत् । सूक्तसाम्नामेकद्वित्र्येकादशावृत्तिः शक्तितो ज्ञेया ।
कद्रुद्राय घोरः कण्वो रुद्रो गायत्री । इमा रुद्राय कुत्सरुद्र आद्यानवजगत्यौ तेत्रिष्टुभौ
आ ते पितर्गृत्समदो रुद्रस्त्रिष्टुप् जपे विनियोगः । सामानि तु आवो राजानं वामदेवो रुद्रस्त्रिष्टुप्
तमुष्टुहि भौमोत्री रुद्रस्त्रिष्टुप् भुवनस्यपितरमृजिश्वा रुद्रस्त्रिष्टुप् जपे विनियोगः । ततोन्य ऋत्विक्
जपार्थं कुंभपंचके प्राक् क्रमेण जपेत् । आशुःशिशानेति त्रयोदशर्चस्यैंद्रोप्रतिरथऋषिरिंद्रो देवता
१० चतुर्थ्यां बृहस्पतिस्त्रिष्टुप् जपे विनियोगः । त्वमग्ने रुद्र इत्यनुवाकस्य हव्यवाट् रुद्रो जगती जपे
वि० । त्वमग्ने वामदेवोऽग्निस्त्रिष्टुप् जपे विनियोगः । रक्षोहणमिति पंचविंशर्चस्यांगिरसः वायुरग्नि-
स्त्रिष्टुप् जपे० । ततो मध्यमकुंभे जपेत् । त्र्यंबकं वसिष्ठोऽनुष्टुप् जपे० अत्रैव पवमानमपि
सकृज्जपेत् । एवं षट्कुंभाशक्तौ रुद्रकुंभं चतुःप्रस्रवणं चेति कुंभद्वयं संस्थाप्य रुद्रैकादशिन्यादि
रुद्रकुंभे जप्त्वाऽप्रतिरथादीनि चत्वारि प्रस्रवणेषु त्र्यंबकमंत्रं पावमानीश्च मध्यमुखे जपेत् । अथा-
१५ चार्यो रुद्रकुंभान्नैर्ऋत्ये स्थंडिलेऽग्निं प्रतिष्ठाप्य तदीशान्यां नवग्रहस्थापनं कृत्वाऽन्वादध्यात् ।
तद्यथा । समिद्द्वयमादायास्यां मूलशांतौ देवतापरिग्रहार्थमन्वाधास्येऽस्मिन्नन्वाहितेऽग्नावित्यादि
चक्षुषी आज्येनेत्यंतमुक्त्वा नवग्रहानाधिदेवताप्रत्यधिदेवतालोकपालान्विनायकादींश्च प्रत्येकममुक-
संख्यया समिच्चर्वाज्यैर्निर्ऋतिं प्रतिद्रव्यमष्टोत्तरशतसंख्यया इंद्रमपश्च प्रत्येकमष्टाविंशतिसंख्यया
घृताक्तपायससमिदाज्यचरुभिर्विश्वेदेवांश्चतुर्विंशत्पृक्षदेवता अष्टाष्टसंख्यया पायसेन रक्षोहणं
२० कृणुष्वेति पंचदशभिः कृसरान्नेन सवितारं दुर्गां जातवेदाग्निं रुद्रं ऋत्विक् श्रुतिं दुर्गां वास्तोष्पति-
मग्निं क्षेत्राधिपतिं मित्रावरुणौ अग्निमेताश्चाष्टाष्टसंख्यया कृसरान्नेन श्रियं तामग्निवर्णामिति
पंचदशर्ग्भिः प्रत्यृचमष्टसंख्यया समिदाज्यचरुभिः सोमं त्रयोदशवारं पायसेन रुद्रं चतुर्गृहीतेनाज्येन
अग्निं वायुं सूर्यं प्रजापतिं बृहस्पतिमिंद्रं विश्वान्देवान्महाव्याहृतिभिराज्येन शेषेण स्विष्ट-
कृतमित्यादि सद्यो यक्ष्य इत्यंतमुक्त्वा समस्तव्याहृतिभिः समिद्द्वयमग्नावादध्यात् । आश्लेषाशांतौ
२५ तु सर्पप्रधानदेवतामधिदेवतां बृहस्पतिं प्रत्यधिदेवतान् पितॄन् भगादित्यायंतर्देवतांश्चेति विशेषः ।
ततः परिसमूहनादि पूर्णपात्रनिधानांतं कृत्वाऽग्नेः प्रागुदग्वा रक्तैः शुक्लैर्वा तंडुलैश्चतुर्विंशद्दलं
पद्मं कृत्वा तत्र प्राग्वत्कुंभं संस्थाप्य तस्मिन् या ओषधीरिति शतमूलानि तदलाभे विष्णु-
क्रांता सहदेवी तुलसी शतावरी कुशमूलानि क्षिप्त्वा पूर्णपात्रं निधाय तत्र साष्टदलं वासो वितत्य
तत्कर्णिकायां निष्कं तदर्धमितां निर्ऋतिप्रतिमामग्न्युत्तारणपूर्वकं पंचामृतस्नापितां मोषुणो घोरः
३० कण्वो निर्ऋतिर्गायत्री मोषुण इति संस्थाप्य

१ ऋ. सं. ५।४।३० । २ इ-ति । ३ ङ-ष्टो । ४ ऋ. सं ८।५।८ ।

" संस्मरेन्निर्ऋतिं श्यामं सुमुखं नरवाहनं । रक्षोधिपं खड्गहस्तं दिव्याभरणभूषितमिति "
ध्यात्वा तद्दक्षिणत इंद्रं यो मधुछंदा इंद्रो गायत्रीतींद्रस्य तदुत्तरतश्चाप्सु मे मेधातिथिरापोऽनुष्टु-
बित्यपां च सौवर्णप्रतिमे संस्थाप्य पदार्थानुसमयेन स्वस्वमंत्रैस्ताः पूजयेत् । तत्र वस्त्रयुग्मं ।
रक्तचंदनं । कृष्णपुष्पाणि । मेषशृंगस्य धूपः । आज्यस्य दीपः । पोलिकौदनादि नैवेद्यं । ब्राह्मणानां
सुरास्थाने सैंधवमिश्रं क्षीरं मांसस्थाने लवणयुक्तं पायसं । क्षत्रियादीनां तु मुख्यमेव । ततः ५
चतुर्विंशद्दलेषु प्रागादितो विश्वेदेवाः । विष्णुः । वसवः । वरुणः । अजैकपात् । अहिर्बुध्न्यः ।
पूषा । अश्विनौ । यमः । अग्निः । प्रजापतिः । सोमः । रुद्रः । अदितिः । बृहस्पतिः । सर्पाः ।
पितरः । भगः । अर्यमा । सविता । त्वष्टा । वायुः । इंद्राग्नी मित्र इत्येताश्चतुर्थ्यंतनमोंतैर्नामभिः
क्रमेणावाह्य पूजयेत् । आश्लेषाशांतौ तु सर्पप्रतिमां 'नमोऽस्तु सर्पेभ्य' इत्यावाह्य

" सर्पो रक्तस्त्रिनेत्रश्च द्विभुजः पीतवस्त्रकः । फलकासिधरस्तीक्ष्णो दिव्याभरणभूषित " इति १०
ध्यात्वा तद्दक्षिणतो बृहस्पते गृत्समदो बृहस्पतिस्त्रिष्टुबिति बृहस्पतिं । तदुत्तरतश्चोदीरतां
शंखः स्वधा त्रिष्टुबिति पितॄनावाह्य चतुर्विंशतिदलेषु प्रागादितो भगायदित्यंतर्क्षदेवता आवाह्य
पूजयेत् । ततोऽन्वाधानक्रमेण पायसचरुकृसरान् श्रपयित्वाऽऽज्यभागांतं कृत्वा यजमानेन सर्वदेवतो-
द्देशेन द्रव्ये त्यक्ते सर्विगन्वाधानोक्तक्रमेणर्क्षदेवता तत्तन्मंत्रैर्हुत्वा रक्षोहायान्वक्ष्यमाणर्भिर्जुहुयात्।
तान्श्च कृणुष्वेति पंचदशर्चस्य वामदेवो रक्षोहा त्रिष्टुप् । कृसरहोमे विनियोगः । एवं १५
सर्वत्र । गायत्र्या विश्वामित्रः सविता गायत्री । जातवेदसे कश्यपो दुर्गा त्रिष्टुप् । त्र्यंबकं
वसिष्ठो रुद्रोनुष्टुप् सीरायुंजंती । बुध कश्चिद् श्रुतिर्गायत्री । तामग्निवर्णां सोभरिर्दुर्गा त्रिष्टुप् ।
वास्तोष्पते । वसिष्ठो वास्तोष्पतिस्त्रिष्टुप् । अग्ने नयागस्त्योऽग्निस्त्रिष्टुप् । क्षेत्रस्य वामदेवः क्षेत्र-
पालोऽनुष्टुप् । गृणाना जमदग्निर्मित्रावरुणौ गायत्री । अग्निं दूतं काण्वो मेधातिथिरग्निर्गायत्री ।
हिरण्यवर्णामिति पंचदशर्चस्य कर्दमानंदचिक्लीतेंदिरासुता ऋषयः श्रीर्देवता आद्यास्तिस्रोऽनुष्टुभः २०
तुर्या प्रस्तारपंक्तिः पंचमीषष्ठ्यौ त्रिष्टुभौ । ततोऽष्टावनुष्टुभावंत्या प्रस्तारपंक्तिः । प्रत्यृचं समिदाज्यचरु-
होमे विनियोगः । त्वन्नः सोमेति त्रयोदशर्चस्य गोतमः सोमस्त्रिष्टुप् । पायसहोमे वि० । या ते
रुद्रेति कश्यपो रुद्रस्त्वाद्यनुष्टुप् । चतुर्गृहीताज्यहोमे वि० । सप्तमहाव्याहृतीनां विश्वामित्राद्य
ऋषयोऽग्न्यादयो देवताः । गायत्र्यादीनि छंदांसि । आज्यहोमे वि० । एवं हुत्वा स्विष्टकृदादिप्राय-
श्चित्ताहुत्यंतं कृत्वा लोकपालनवग्रहविनायकादिभ्यो निर्ऋतीन्द्राभ्यां रुद्रक्षेत्रपालयोश्च बलीन् २५
दत्वा पूर्णाहुतिं जुहुयात् । तत्र मंत्राः । समुद्रादूर्मिरित्येकादशर्चस्य वामदेव आपस्त्रिष्टुप् । अंत्या
जगती प्रजापते हिरण्यगर्भः प्रजापतिस्त्रिष्टुप् । पूर्णा दर्वि विश्वे देवाः शतक्रतुरनुष्टुप् । सप्त ते
अग्ने सप्तवानग्निर्जगती पूर्णाहुतिहोमे विनियोगः । एवं सर्वत्र । ततो होमशेषं समाप्य प्रधानकुंभं
दक्षिणतः स्पृष्ट्वा शतवारं त्र्यंबकमंत्रं जप्त्वा तथैव रुद्रकुंभं च स्पृष्ट्वोक्तरीत्या रुद्रैकादशिन्यादि
जप्त्वा गंधादिभिः कुंभद्वयगतनिर्ऋतिरुद्रावभ्यर्च्य सर्त्विगाचार्यः सर्वकुंभोदकैर्भद्रासनोपविष्टं ३०
सापत्यकलत्रं यजमानमभिषिंचेत् । तत्र मंत्राः । अक्षीभ्यामिति षण्णां काश्यपो यक्ष्महानुष्टुप् ।
अभिषेके विनियोगः । एवमुत्तरत्र । पवस्व विश्वचर्षण इति त्रिंशदृचस्य शतं वैखानसाः पवमान-

---

१ ह्रा—न

सोमो गायत्री । आपो हि ष्ठेति नवर्चस्यांबरीषः सिंधुद्वीप आपो गायत्र्यंत्ये द्वेऽनुष्टुभौ पंचमी वर्द्धमाना सप्तमी प्रतिष्ठा । यत इंद्रेति द्वयोः सतर्षयो विश्वेदेवा अनुष्टुप् । सहस्राक्षेणेति तृचस्य प्राजापत्यो यक्ष्मनाशनो यक्ष्मघ्ना त्रिष्टुप् । द्वयोरंत्यानुष्टुप् । देवस्य त्वेति त्रिभिर्यजुर्भिर्ध यज्जाग्रतेति षण्णां शिवसंकल्पमंत्राणां प्रजापतिर्मनस्त्रिष्टुप् ।

५ " योऽसौ वज्रधरो देवो महेंद्रो गजवाहनः । मूलजातशिशोर्दोषं मातापित्रोर्व्यपोहतु ॥

" योऽसौ शक्तिधरो देवो हुतभुक् मेषवाहनः । सप्तजिह्वश्च देवोऽग्निर्मूलदोषं व्यपोहतु ॥

" योऽसौ दंडधरो देवो धर्मो महिषवाहनः । मूलजातशिशोर्दोषं यमो मम व्यपोहतु ॥

" योऽसौ खड्गधरो देवो निर्ऋती राक्षसाधिपः । प्रशामयतु मूलोत्थं दोषं गंडांतसंभवं ॥

" योऽसौ पाशधरो देवो वरुणश्च जलेश्वरः । नक्रवाहः प्रचेताख्यो मूलोत्थाघं व्यपोहतु ॥

१० " योऽसौ देवो जगत्प्राणो मारुतो मृगवाहनः । प्रशामयतु मूलोत्थं दोषं बालस्य शांतिदः ॥

" योऽसौ निधिपतिर्देवः खड्गभृद्वाजिवाहनः । मातापित्रोः शिशोश्चैव मूलदोषं व्यपोहतु ॥

" योऽसौ पशुपतिर्देवः पिनाकी वृषवाहनः । आश्लेषामूलगंडांतं दोषमाशु व्यपोहतु ॥

" विघ्नेशः क्षेत्रपो दुर्गा लोकपाला नवग्रहाः । सर्वदोषप्रशमनं सर्वे कुर्वंतु शांतिदाः ॥ "

आश्लेषाशांतौ तु

१५ " आश्लेषाऋक्षजातस्य मातापित्रोर्धनस्य च । भ्रातृज्ञातिकुलस्थानां दोषं सर्वं व्यपोहतु ॥

" योऽसौ वागीश्वरो नाम अधिदेवो बृहस्पतिः । मातापित्रोः शिशोश्चैव गंडांतस्य व्यपोहतु ॥

"पितरः सर्व भूतानां रक्षंतु पितरं सदा । सर्पनक्षत्रजातस्य वित्तं च ज्ञातिबांधवान्" ॥ इति विशेषः ।

ततः तर्चर्योः शंयुर्विश्वेदेवाः शक्वरी अभिषेके विनियोगः । ततो वस्त्रांतरित निर्ऋति-रुद्रकुंभोदकेन स्नापितो यजमानो धृतधौतवासा सापत्यकलत्रः कांस्यपात्रस्थाज्यं रूपं रूपमि-

२० त्यवेक्ष्य विप्राय दत्वाऽऽचार्यादीनभ्यर्च्याचार्याय गां ब्रह्मणे वृषं सदस्यायाश्वं रुद्रजापिने कृष्णवृषं वेन्वायलाभे तत्तन्मूल्यं वा दत्वा स्वशक्त्या ऋत्विग्भ्यो भूयसीं च दत्वोत्तरपूजां कृत्वा यांतिति विसृज्याचार्याय निर्ऋतिग्रहप्रतिमाकुंभादि रुद्रजापिने रुद्रप्रतिमाकुंभादि संकल्पपूर्वकं दत्वाऽग्नि-मभ्यर्च्य गच्छ गच्छेति विसृज्य शतं तदर्द्धं दश वा ब्राह्मणान् भोजयित्वा शांत्याशीर्वाचयित्वा यस्य स्मृत्येत्याद्युक्त्वा सज्जनो भुंजीत ।

२५ इति श्रीमद्भट्टनीलकंठकृते भगवंतभास्करे शांतिमयूखे मूलाश्लेषाशांतिप्रयोगः ॥

## अथ वैधृतिव्यतीपातसंक्रांतिशांतिः ।

शौनकः । "कुमारजन्मकाले तु व्यतीपातश्च वैधृतिः । संक्रमश्च रवेस्तत्र जातो दारिद्र्यकारकः ॥

" दरिद्राणां महादुःखं व्याधिपीडासमुद्भवं । अश्रियो मृत्युमाप्नोति नात्र कार्या विचारणा ॥

" स्त्रीणां च शोकं दुःखं च सर्वनाशकरो भवेत् । शांतिर्वा पुष्कला कार्या तस्य दोषो न कश्चन ॥

३० " गोमुखप्रसवं कुर्याच्छांतिं कुर्यात्प्रयत्नतः । जपाभिषेकदानैश्च होमादपि विशेषतः ॥

" नवग्रहमखं कुर्यात्तस्य दोषोपशांतये । प्रथमं गोमुखं जन्म ततः शांतिं समाचरेत् ॥

" गृहस्य पूर्वदिग्भागे गोमयेनानुलिप्य च । अलंकृते सुदेशे तु व्रीहिराशिं प्रकल्पयेत् ॥

" पंचद्रोणमितं धान्यं तदर्द्धं तंडुलेन च । तदर्द्धं तु तिलैः कुर्यादन्योऽन्योपरि कल्पयेत् ॥

---

१ ख–मातापित्रोर्व्यपोहतु ।

## अथ प्रयोगः।

कर्ता गोमुखप्रसवं कृत्वा मासपक्षाद्युल्लिख्यास्य शिशोर्वैधृतौ व्यतीपाते संक्रांतौ वोत्पत्या सूचितस्यानिष्टस्य निरासार्थं शांतिं करिष्य इति संकल्प्य गणेशपूजास्वस्तिवाचनमातृकापूजावृद्धिश्राद्धाचार्यादिवरणानि कुर्यात्। अथाचार्यः सर्षपविकिरणादि कृत्वा प्राच्यां
५ गोमयोपलिप्तभुवि पंचद्रोणतदर्धमितव्रीहितंडुलतिलानन्योन्योपरि राशीकृत्य तत्राष्टदलं विरच्य तत्कर्णिकायां कुंभं संस्थाप्य तीर्थोदकेनापूर्य तत्र सप्त मृत्पंचपल्लवरत्नमयाष्टगंधसर्वौषधीः क्षिप्त्वा वस्त्रयुग्मेनावेष्ट्य पूर्णपात्रं निधाय तत्र वैधृतिव्यतीपातयोः शांतौ मध्ये त्र्यंबकमिति रुद्रं तद्दक्षिणत उत्सूर्य इति सूर्यमुत्तरतश्चाप्यायस्वेति सोमं संक्रांतिशांतौ तु मध्ये सूर्यं तद्दक्षिणतोऽग्निं दूतमित्यग्निमुत्तरतो रुद्रं तत्तत्प्रतिमास्वावाह्य षोडशभिः पंचभिर्वोपचारैः संपूज्य रुद्रसूर्यसोमप्रतिमाः स्पृष्ट्वा-
१० ष्टसहस्राष्टशताष्टाविंशत्यन्यतरसंख्यया मृत्युंजयमंत्रमुयक्ष्येत्यादिसर्वसौरमंत्रानाप्यायस्वेति च क्रमाज्जपेत्। संक्रांतिशांतौ तु पूर्वं सौरजपस्ततो मृत्युंजयजपः। ततो ऋत्विजः प्रागादिदिक्चतुष्टं क्रमेणा नो भद्रा भद्रा अग्ने सहस्रशीर्षा कद्रुद्रायेति सूक्तानि त्र्यंबकमंत्रं च जपेयुः। आचार्यस्तु कुंभात्पश्चिमेग्निं प्रतिष्ठाप्य ग्रहावाहनादिपूजांतं कृत्वाऽन्वादध्यात्। तत्र चक्षुषी आज्येनेत्यंते रुद्रसूर्यसोमान् समिच्चर्वाज्यैस्तत्तन्मंत्रैर्मृत्युंजयमंत्रेण च तिलाहुतिभिरष्टसहस्राष्टशताष्टाविंशति
१५ अन्यतरसंख्यया शेषेण स्विष्टकृतमित्यादि। संक्रांतिशांतौ तु सूर्याग्निरुद्रानिति विशेषः। तत आज्यभागांतेऽन्वाधानोक्तक्रमेण हुत्वा बलिदानांते कलशोदकैः समुद्रज्येष्ठा इति सूक्तेनापो हि ष्ठेति तृचेनाक्षीभ्यामिति सूक्तेन पावमानीभिः प्रधानाधिप्रत्यधिदेवतामंत्रैः सुरास्त्वेत्यादिपौराणैश्चाभिषिक्तो यजमानोऽभिषेकवस्त्रमाचार्याय निवेद्याज्यमवेक्ष्य पूर्णाहुतिं हुत्वाऽऽचार्याय धेनुं वस्त्रयुग्मांगुलीयकादि ऋत्विग्भ्यश्च दक्षिणां दत्वाऽन्येभ्यश्च भूरि दक्षिणां दत्वा शतं शक्त्या वा ब्राह्मणान्
२० भोजयित्वा बंधुभिः सह भुंजीतेति वैधृतिव्यतीपातसंक्रांतिशांतयः॥

## अथैकनक्षत्रजन्मशांतिः।

गर्गः

"एकस्मिन्नेव नक्षत्रे भ्रात्रोर्वा पितृपुत्रयोः। प्रसूतिश्चेत्तयोर्मृत्युर्भवेदेकस्य निश्चयः॥
"तद्दोषनाशाय तदा प्रशस्तां शांतिं च कुर्यादभिषेचनं च।
२५ "संपूज्य ऋक्षप्रतिमां तदग्रे दानं च कुर्याद्विभवानुरूपं॥
"तत्र शांतिं प्रवक्ष्यामि सर्वाचार्यमतेन तु।
"शुभर्क्षे शुभवारे च चंद्रताराबलान्विते। रिक्ताविष्टीविवर्ज्ये तु प्रारभेद्विभवे सुधीः॥
"आचार्यं वरयेत्पूर्वं चतुरश्च द्विजोत्तमान्। पुण्याहं वाचयित्वा तु शांतिकर्म समाचरेत्॥
"अग्नीशानदिग्भागे नक्षत्रप्रतिमां ततः। तन्नक्षत्रोक्तमार्गेण अर्चयेत्कलशोपरि॥
३० "रक्तवस्त्रेण संछाद्य वस्त्रयुग्मेन वेष्टयेत्। स्वशाखोक्तेन मार्गेण कुर्यादग्निमुखं ततः॥

---

१ ह्म–वैधृतिशांतौ। २ ऋ. सं. ५।१।४। ३ ऋ. सं. १।६।२१। ४ ह्म व्यतीपातसंक्रांतिशांत्योस्तु
५ ऋ सं. ११।२२। ६ ऋ सं ७।६।५। ७ ऋ सं. ८।८।२१। ८ ह्मख–गार्ग्यः र-गर्गः।

" अनेनैव तु मंत्रेण हुनेदष्टोत्तरं शतं । प्रत्येकं समिदन्नाज्यैः प्रायश्चित्तांतमेव च ॥
" अभिषेकं ततः कुर्यादाचार्यः पितृपुत्रयोः । वस्त्रालंकारगोदानेराचार्यं पूजयेत्पुनः ॥
" ऋत्विजां दक्षिणां दद्यान्माषत्रयसुवर्णकं । देवताप्रतिमादानं धान्यवस्त्रादिभिः सह ॥
" यानशय्यासनादीनि दद्यात्तद्दोषशांतये । भोजयेद्ब्राह्मणान् सर्वान् वित्तशाठ्यविवर्जितः ॥ "

## अथ प्रयोगः ।

कर्त्ता मासपक्षाद्युल्लिख्यास्य कुमारस्य पित्राद्येकर्क्षोत्पत्तिसूचितारिष्टशांत्यर्थमेकनक्षत्रशांतिं करिष्य इति संकल्प्य गणेशपूजनस्वस्तिवाचनाभ्युदयिकाचार्यर्त्विग्वरणानि कुर्यात् । अथाचार्योऽग्नेरीशान्यां कुंभं संस्थाप्य रक्तवस्त्रयुग्मेनाच्छाद्य तस्मिन् पूर्णपात्रोपरि तत्तन्नक्षत्रोक्तमंत्रेण प्रतिमायां तत्तन्नक्षत्रदेवतामावाह्य रक्तवस्त्रयुग्मेन संपूज्याग्निं प्रतिष्ठाप्यान्वाधायाऽऽज्यभागांतं कृत्वा तत्तन्नक्षत्रमंत्रेण समिच्चर्वाज्यानि प्रत्येकमष्टोत्तरशतं हुत्वा होमशेषं समाप्य शिशुं तत्पित्रादींश्चाभिषिंचेत् । ततः कर्त्तोत्तरपूजां कृत्वा विसृज्य प्रतिमादिकं गवादि चाचार्याय दत्वा ऋत्विग्भ्यश्च प्रत्येकं सौवर्णमाषत्रयात्मिकां यथाशक्ति दक्षिणां दत्वा यथाविभवं यानशय्यासनादीनि च दत्वा ब्राह्मणान् भोजयित्वा स्वयं भुंजीतेत्येकनक्षत्रशांतिप्रयोगः ॥　　५　　१०

## अथ ग्रहणोत्पत्तौ शांतिः ।

शौनकः "ग्रहणे चंद्रसूर्यस्य प्रसूतिर्यदि जायते । व्याधिपीडा तदा स्त्रीणामादौ तु ऋतुदर्शनात् ॥
" इत्थं संजायते यस्तु तस्य मृत्युर्न संशयः । व्याधिपीडा च दारिद्र्यं शोकश्च कलहो भवेत् ॥　　१५
" शांतिं तेषां प्रवक्ष्यामि नराणां हितकाम्यया ।
" यस्मिन् ऋक्षे विशेषेण ग्रहणं संप्रजायते । तदृक्षाधिपते रूपं सुवर्णेन प्रकल्पयेत् ॥
" यथाशक्त्यनुसारेण वित्तशाठ्यं न कारयेत् ॥
" सूर्यग्रहे सूर्यरूपं सुवर्णेन विशेषतः । चंद्रं चंद्रग्रहे धीमान् रजतेन विशेषतः ॥
" राहुरूपं प्रकुर्वीत नागेनैव विचक्षणः । शुचौ देशे प्रयत्नेन गोमयेन प्रलेपयेत् ॥" नागेन सीसेन । २०
" तस्योपरि न्यसेद्धीमान्नववस्त्रं सुशोभनं । त्रयाणां चैकरूपाणां स्थापनं तत्र कारयेत् ॥
" रक्ताक्षतं रक्तगंधं रक्तपुष्पांबराणि च । सूर्यग्रहे प्रदातव्यं सूर्यप्रीतिकराय च ॥
" श्वेतवस्त्रं श्वेतमाल्यं श्वेतगंधाक्षतादिभिः । चंद्रग्रहे प्रदातव्यं चंद्रप्रीतिकराय च ॥
" राहवे चैव दातव्यं कृष्णपुष्पांबराणि च । दद्यान्नक्षत्रनाथाय श्वेतगंधानुलेपनं ॥
" सूर्यं संपूजयेद्धीमानाकृष्णेनेति मंत्रतः । चंद्रग्रहे च पालाशैः समिद्भिर्जुहुयान्नरः ॥　　२५
" दूर्वाभिर्जुहुयाद्धीमान् राहोः संप्रीणनाय च । समिद्भिर्जलवृक्षोत्थैर्भेशाय जुहुयाद्बुधः ॥"
भेशाय नक्षत्राधिपतये ।
" आज्येन चरुणा चैव तिलैश्च जुहुयात्ततः । पंचगव्यैः पंचरत्नैः पंचत्वक्पंचपल्लवैः ॥
" जलैरौषधकल्कैश्च सहितैः कलशोदकैः ।" औषधकल्कैः सर्वौषधिकल्कैः ॥
" अभिषेकं प्रकुर्वीत यजमाने प्रयत्नतः । मंत्रैर्वरुणदेवत्यैरापोहिष्ठादिभिस्त्रिभिः ॥　　३०
" इमं मे गंगे पितरस्तत्त्वायामीति मंत्रकैः ।

---

१ ऋ. सं. ८।३।६ । २ ऋ. सं. ७।१।१५ ।

" अभिषेके निवृत्ते तु यजमानः समाहितः । आचार्यं पूजयेत्पश्चात्सुशांतो नियतेंद्रियः ॥
" तस्मै दद्यात्प्रयत्नेन भक्त्या प्रतिकृतित्रयं । दक्षिणाभिश्च संयुक्तं यथाशक्त्यनुसारतः ॥
" ब्राह्मणान्भोजयित्वा तु प्रणिपत्य क्षमापयेत् । तेभ्योऽपि दक्षिणां दद्याद्यजमानः समाहितः ॥
" अनेन विधिना शांतिं कृत्वा सम्यग्विशेषतः । अकालमृत्युशोकं च व्याधिपीडां न चाप्नुयात् ॥
५ " सौख्यं सौमनसं नित्यं सौभाग्यं लभते नरः ॥
" इत्थं ग्रहणजातानां सर्वारिष्टविनाशनं । कथितं मार्गवेणेदं शौनकाय महात्मने ॥ "

इति चंद्रसूर्यग्रहणप्रसूतिशांतिः ।

## अथ विषघटिकाशांतिविधिः ॥

तत्र वृद्धगार्ग्यः

१० " विषनाडीषु संजातः पितृभ्रातृधनात्मनां । नाशकृद्विषशस्त्राद्यैः क्रूरलग्नेऽष्टमेऽपि वा ॥
" तद्दोषपरिहाराय शांतिकर्म समारभेत् । रुद्रो यमोऽग्निर्मृत्युश्च देवताः परिकीर्तिताः ॥
" सुवर्णेन यथाशक्त्या तत्तल्लक्षणसंयुताः । प्रतिमाः कारयित्वा तु आढकव्रीहिभिः स्थले ॥
" स्थंडिलं परिकल्प्याथ कुंभमौषधिसंयुतं । जलैः संपूर्य संस्थाप्य मृदादि प्रक्षिपेत्ततः ॥
" वस्त्रद्वयेन संवेष्ट्य पंचरत्नानि निक्षिपेत् । कुंभोपरि तु संस्थाप्य चतस्रः प्रतिमास्तथा ॥
१५ " तत्तन्मंत्रैश्च संपूज्य गंधपुष्पोपहारकैः । कद्रुद्रायेति मंत्रेण यमाय सोममित्यथ ॥
" अग्निर्मूर्द्धेति मंत्रेण परं मृत्यो इति त्वथ । एतैश्चतुर्भिर्मंत्रैस्तु क्रमाद्धोमं तु नेत्तथा ॥
" समिच्चरुघृतद्रव्यैः प्रत्येकं च यथाक्रमं । ऋत्विग्भिश्च सहाचार्यो हुनेदष्टसहस्रकं ॥
" अष्टोत्तरशतं वाऽथ अष्टाविंशतिमेव वा । ततस्तिलैर्हुनेद्व्याहृतिस्तत्तन्मंत्रैश्च कल्पवित् ॥
" ततोऽभिषिंचयेदेनं मंत्रैः पौराणिकैः क्रमात् । प्रार्थयेतो भगवानीशः पिनाकी सर्वतोमुखः ॥
२० " तव मूर्तिप्रदानेन समस्तामीष्टदो भव । ईश्वतीनो यमः कालो दंडहस्तः प्रशांतधीः ॥
" रक्तदृक् पाशभृत्कृष्णो महिषस्थः शिवं कुरु ॥
" पिंगलश्मश्रुकेशाक्षः पिनाक्षचतुरोहणः । छागस्थः साक्षसूत्रश्च सप्तार्चिः शक्तिधारकः ॥
" मम मूर्तिप्रदानेन मम पापं विनाशय ॥
" दंष्ट्राकरालवदनो नीलांजनसमाकृतिः । वृकखड्गगदापाणिर्मृत्युर्मां पातु सर्वदा ॥
२५ " इत्यमेवंविधैर्मंत्रैर्यथाविधिसमाहितः । गोभूहिरण्यवस्त्रैश्च आचार्यं पूजयेत्सुधीः ॥
" एवं कुर्यात्प्रदानेन विषदोषः प्रशाम्यति " ॥ इति विषघटीशांतिः ॥

## अथ गंडांतशांतिः ।

गर्गः

" अश्विनीमघमूलादौ त्रिनेदनवनाडिका । रेवतीसर्पशक्रांते मासरुद्ररसाः क्रमात् ॥
३० " अश्विनीमघमूलादौ नाडिकाद्वितयं तथा । अश्विनीमघमूलानां पूर्वार्द्धे बाध्यते पिता ॥
" पूषादिसर्पपश्चार्द्धे जननी बाध्यते शिशोः । पितृघ्नश्च दिवाजातो रात्रिजातस्तु मातृहा ॥
" आत्महा संध्ययोर्जातो नास्ति गंडे निरामयः । सर्वेषां गंडजातानां परित्यागो विधीयते ॥

१ ऋ. सं. १।३।२६ । २ ऋ. सं. ७।६।१९ । ३ ऋ. सं. ६।३।३१ । ४ ऋ. सं. ७।६।२६ ।

" वर्जयेद्दर्शनं यावद्वर्षं षाण्मासिकं भवेत् । तस्य शांतिं प्रवक्ष्यामि सोममंत्रेण भक्तिमान् ॥
" कांस्यपात्रं प्रकुर्वीत पलैः षोडशभिर्नवं । अष्टभिश्च चतुर्भिश्च द्वाभ्यां वा शोभनं तथा ॥
" तन्मध्ये पायसं शुभ्रं नवनीतेन पूरितं । राजतं चंद्रमर्चेत सितपुष्पसहस्रकैः ॥
" दैवज्ञः क्षौमवासाश्च शुक्लमाल्यांबरार्चितः । सोमोऽहमिति संचिंत्य पूजां कुर्यादतंद्रितः ॥
" जपेत्साहस्रकं मंत्रं श्रद्दधानः समाहितः । आप्यायस्वेति मंत्रेण पूजां कुर्यात्समाहितः ॥ ५
" दद्याद्वै दक्षिणामिष्टां गंडदोषप्रशांतये ॥
" शुक्लं वागीश्वरं चैव ताम्रपात्रसमन्वितं । गंडदोषोपशांत्यर्थं दद्याद्वेदविदे शुचिः ॥ "

इति गडांतशांतिः ॥

## अथ दिनक्षयादिशांतिः ।

गर्गः १०

" दिनक्षये व्यतीपाते व्याघाते विष्टिवैधृतौ । मूले गंडेऽतिगंडे च परिघे यमघंटके ॥
" कालदंडे मृत्युयोगे दुष्टयोगे सुदारुणे । तस्मिन् गंडदिने प्राप्ते प्रसूतिर्यदि जायते ॥
" अतिदोषकरी प्रोक्ता तत्र पापयुते सति । विचार्य तत्र दैवज्ञं शांतिं कृत्वा यथाविधि ॥
" यजमानो देवतानां ग्रहाणां चैव पूजनं । दीपं शिवालये भक्त्या घृतेन परिदीपयेत् ॥
" अभिषेकं शंकरस्य अश्वत्थस्य प्रदक्षिणं । आयुर्वृद्धिकरं जाप्यं सर्वारिष्टविनाशनं ॥ १५
" गुरुदैवतविप्राणां पूजनं गोश्च वर्द्धनं । पुष्यायुस्तुष्टिशांत्यर्थमभीष्टफलसिद्धये ॥
" सर्वारिष्टहरार्थाय ग्रहयज्ञं समाचरेत् । शिवाय विधिवद्भक्त्या दीपदानं करोति यः ॥
" अखंडं गोघृतेनैव स वै मृत्युं जयेन्नरः । विष्णुमूर्तिं महापुण्यमश्वत्थं श्रीकरं सदा ॥
" प्रदक्षिणं नरो भक्त्या कृत्वा मृत्युंजयेन्नरः । सर्वसंपत्समृद्ध्यर्थं नित्यं कल्याणवृद्धये ॥
" अभीष्टफलसिद्ध्यर्थं कुर्याद्ब्राह्मणभोजनं । अभिषेकं शिवे शांतिं कृत्वा भक्त्या नरोत्तमः ॥ २०
" अकालमृत्युं निर्जित्य दीर्घायुर्जायते नरः ॥
" गाणपत्यं पुरुषसूक्तं सौरं मृत्युंजयं शुभं । शांतिआप्यं रुद्रजाप्यं कृत्वा मृत्युंजयो भवेत् ॥
" मूले वा सर्पगंडे वा कुर्यादेतानि यत्नतः । आयुर्वृद्धिकरार्थाय गंडदोषप्रशांतये ॥ "

इति गर्गोक्तगंडजननशांतिः ॥

## अथ त्रिकशांतिः ।

शांतिसर्वस्वे २५

" सुतत्रये सुता चेत्स्यात्तत्रये वा सुतो यदि । मातापित्रोः कुलस्यापि तदाऽनिष्टं महद्भवेत् ॥
" ज्येष्ठनाशो धने[2] हानिर्दुःखं वा सुमहद्भवेत् । तत्र शांतिं प्रकुर्वीत वित्तशाठ्यविवर्जितः ॥
" जातस्यैकादशाहे वा द्वादशाहे शुभे दिने । आचार्यमृत्विजो वृत्वा ग्रहयज्ञपुरःसरं ॥
" सह वा ग्रहयज्ञः स्यात्स्वस्य वित्तानुसारतः । ब्रह्मविष्णुमहेशेंद्रप्रतिमाः स्वर्णतः कृताः ॥
" पूजयेद्धान्यराशिस्थकलशोपरि शक्तितः । पंचमे कलशे रुद्रं पूजयेद्रुद्रसंख्यया ॥ ३०
" रुद्रसूक्तानि चत्वारि शांतिसूक्तानि सर्वशः । द्विज एको जपेद्धोमकाले शुचिः समाहितः ॥
" आचार्यो जुहुयात्तत्र समिदाज्यतिलांश्चरूं । अष्टोत्तरसहस्रं वा शतं वा विंशतिं तु वा ॥

१ ऋ. सं. १।६।२२ । २ धैं-धन ।

“ देवताभ्यश्चतुर्वक्त्रादिभ्यो ग्रहपुरःसरं । ब्रह्मादिमंत्रैर्दिस्य यत इंद्र भयामहे ।
“ ततः स्विष्टकृते हुत्वा बलिं पूर्णाहुतिं ततः । अभिषेकं कुटुंबस्य कृत्वाऽऽचार्यं प्रपूजयेत् ॥
“ हिरण्यं धनुरेका च ऋत्विजो दक्षिणा ततः । प्रतिमा गुरवे देया उपस्कारसमन्विताः ॥
“कांस्यास्यवीक्षणं दत्वा शांतिपाठं तु कारयेत् । ब्राह्मणान् भोजयेच्छक्त्या दीनानाथांश्च तर्पयेत् ॥
५ “ एवं शांतिविधानेन सर्वारिष्टं विलीयते ॥ इति त्रिकशांतिः ॥

## अथ प्रसववैकृतशांतिविधिरुच्यते ।

“ अकालप्रसवा नार्यः कालातीतप्रजास्तथा । विकृतप्रसवाश्चैव युग्मप्रसवनास्तथा ॥
“ अमानुषा असंज्ञाश्च अजातव्यंजनास्तथा । हीनांगा अधिकांगाश्च जायंते यदि वा स्त्रियः ॥
“ पशवः पक्षिणश्चैव तथैव च सरीसृपाः । विनाशं तस्य देहस्य कुलस्य च विनिर्दिशेत् ॥
१० “ निर्वासयेत्तां नृपतिः स्वराष्ट्रात्स्त्रियश्च पूज्याश्च ततो द्विजेंद्राः ॥
“ चिकित्सनैर्ब्राह्मणतर्पणैश्च ततोऽस्य शांतिं समुपैति पापं ॥”

## अथ यमलशांतिविधिः ।

अत्र ब्राह्मणं

“ तदाहुर्य आहिताग्निर्यस्य भार्या गौर्वा यमौ जनयेत्का तत्र प्रायश्चित्तिरिति । सोऽग्नये मरुत्वते
१५ त्रयोदशकपालं पुरोडाशं निर्वपेत्तस्य याज्यानुवाक्ये मरुतो यस्य हि क्षयेऽग्ना इवेदचरमाअहेत्ये-
त्याहुतिं वाऽऽहवनीये जुहुयादग्नये मरुत्वते स्वाहेति सा तत्र प्रायश्चित्तिरिति ॥ ”

कारिका

“ अथ यस्य वधूर्गौ वा जनयेद्वेयमौ ततः । समरुत्यश्चरुं कुर्यात्पूर्णाहुतिमथापि वेति ॥

कात्यायनगृह्ये । “ अथातो यमलजनने विधिं व्याख्यास्यामो यस्य भार्या गौर्वा
२० दासी वा वडवा विकृतिं प्रसवेत्स प्रायश्चित्ती भवेत्पूर्णे दशाहे चतुर्णां क्षीरवृक्षाणां काष्ठमाहरेत् ।
प्लक्षवटोदुंबराश्वत्थशमीश्वेतदारुगौरसर्षपास्तेषामापो हिरण्य दूर्वांकुरैः सपद्मवैरप्यौ कलशान्
प्रपूर्य सर्वौषधीभिर्दंपती स्नापयित्वाऽलंकृत्य तौ दर्भेषूपविशतः । मारुतं स्थालीपाकं श्रपयित्वाऽऽ-
ज्यभागावष्टाज्याहुतीर्जुहोति पूर्वोक्तैः स्नपनमंत्रैः स्थालीपाकस्य जुहोत्यग्नये स्वाहा सोमाय०
पवमानाय० पावकाय० मारुताय० मरुद्भ्यः० यमाय० अंतकाय० मृत्यवे० अग्नये० स्विष्टकृते
२५ स्वाहेत्येतदेव गृहीत्वाऽऽज्येषु उलूकः कपोतो वा गृध्र श्येनो वा प्रविशेत् । यस्तंभो वा प्ररोहेद्वल्मीकं
वल्मीकं मधुजालं वा भवेत् । उदकुंभप्रज्वलने आसनशयनभंगे गृहगोधिकाकृकलाससरीसृपसर्पणे
छत्रध्वजविनाशेष्वन्येषु भूकंपोल्कापातकाकसर्पसंभ्रमप्रोक्षणादिष्वेतदेव प्रायश्चित्तं । गृहशांतिं
चोक्तविधिना कृत्वाऽऽचार्याय वरणं दत्वा ब्राम्हणान् भोजयित्वा स्वस्ति वाच्याऽऽशिषः प्रतिगृह्णी-
यादिति ।” पंचेंद्राणि पदानि यस्मिन्नसौ पंचेंद्रो मंत्रः । एवं पंचवारुणोऽपि । तौ च प्रयोगे वक्ष्येते

१ र-पाठ ; क्षयघड–क्यामुपाहरेत्; दयह–क्षपायामुपाहरेत । २ र-पाठ , क्षयहदपह–स्वभावो प्ररोहे वल्मीकमधुजालआभावेद्रु । ३ क्षयघयरदह–वां । ४ क्षघड वक्ष्यते ।

अथ प्रयोग । 'मम भार्याया यमलजननसूचितसर्वारिष्टशांतिद्वारा श्रीपरमेश्वरप्रीत्यर्थं कात्यायनपरिशिष्टोक्तां सग्रहमखां यमलजननशांतिं करिष्ये ' इति संकल्प्य गणेशपूजनाचार्य वरणांतं कुर्यात्। तत आचार्यो 'यदत्र संस्थितमिति' सर्षपान् विकीर्य पूर्वस्यां पूर्वादिक्रमेणाष्टौ कलशान् 'मही द्यौरित्यादिना क्षीरवृक्षकषायप्लक्षवटोदुंबराश्वत्थशमीदेवदारुशाखागौरसर्षपहिरण्यदूर्वांकुरपंच- पल्लवसर्वौषधियुतान् स्थापयित्वा तेज्जलेन यजमानं सपत्नीकं स्नापयेत्। तत्र मंत्रा । आपो हि ष्ठेति	५ तिसृणामंबरीष सिंधुद्वीप आपो गायत्री । अभिषेके वि । वरुणस्य क्षत्रसदनमसि वरुणस्यर्त्त तत्प दन्यमासीत्। अभि ०। इदमाप इत्यस्य सिंधुद्वीप आपोनुष्टुप् । अत्राघमपकिल्बिषमपकृत्यामयोरप । अपामार्गत्वमस्मदपदु'स्वप्न्य सुव । अभिषेक विनि० । ततो वस्त्रालंकृतौ दपती दर्भेषु उपविश्या चार्योऽग्निस्थापनं कुर्यात्। तत ईशान्यां गृह्यस्थाननेऽन्वाधानं। अग्निमन्व हितमनाविं वायुस्त्वा- ऽत्र प्रधानं ग्रहान् समिच्चर्वाज्यैः आवसिन्सुभि इंद्र तिसृभिः वरुणमकया अपो द्वाभ्यां आज्येन	१० अग्नि० सोम० पवमान० पावक० मारुत० मरुत ० यम० अंतक० मृत्यु एकैकया चर्वाहुत्या शेषेण स्विष्टकृतमित्यादि । ततोऽन्वाधानाद्विक्रमण होमं समाप्य बलिदानपूर्णाहुतिभिराभिषेक दक्षिणादानांतं कृत्वा यथाशक्त्या ब्राह्मणं न भोजयित्वा ' स्वस्ति भवंतो ब्रुवंत्विति' वाचयित्वा ते ' स्वस्ती ' त्युक्त तेभ्य आशिषो गृह्णीयादिति । इति यमलशांति ॥

अथ प्रथमदिनादिषु देवीगृहीतबालकरक्षण । मदनरत्ने योगसागरे	१५
" प्रथमेऽहनि गृण्हाति बालकं बालिनी ग्रही । " ' पापिनी ग्रहीति ' नारायणीये पाठ । गाधिनीति पुराणोत्तरे ।
" तया गृहीतमात्रस्य चिह्नितान्युपलक्षयत् । गात्रोद्वेगो निराहारो लालाग्रावानिवर्तन ॥
" लिंपेत् बालकं लोध्रमंजिष्ठातालचंदन । धपयन्महिषाक्षेण ततो मुंचति सा ग्रही ॥ "
लेपनधूपने बालस्य नारायणीये बलिदानानुवृत्तौ	२०
" मत्स्यमांससुराभक्ष्यगंधास्रक्धूपदीपकै । बलिं दद्यादिति " शेष ॥
बलिमंत्र प्रयोगसारे " ॐनमश्चामुंड भगवति विच्चे ह्रीं ह्रीं ह्रीं ह्रीं अपसरतु दुष्टग्रहा हुं । तद्यथा गच्छतु यातान्यत्र स्थाने रुद्रा ज्ञापयति स्वाहा। विच्चे हे ह्रांह्रींहुं मुंच मुंच स्वाहेति । बालग्रहाणां विधेय शस्ता बलिनिवेदन । ' बलिश्च रवेरुदयेऽस्ते दिनार्द्धे वा देय ।
बलिस्थानानि प्रयोगसारे	२५
" कदंबश्च करंजश्च विनीतो निंब एव च । अश्वत्थोदुंबरश्चैव भल्लातकवटौ तथा ॥
" मातृवृक्षा क्रमेणोक्ता पूर्वादीशांतदिग्गता । तथामेकं समाश्रित्य बलिं दद्याद्यथोदितमिति ॥"
" प्रतिस्थूल प्रत्युदक प्रतिवृक्षमथापि वा ।" स्थूल तट । क्वचित्तु कूलमित्येव पाठ ॥
" अत्राशायामनुक्तायां प्राक्प्रत्योनामनुसारत । यत्र वा रोचते तत्र मातृणां बलिमाहरेत् ॥
" कृत्वा नीराजनांतं बलिमिति विधिवद्वालमाहूय सस्पृश्य	३०
आद्भिस्तत्सर्वगात्रं शिरसि सकुसुमैरक्षतैर्भामयित्वा ।

---

१ घक्षऽश्यइर–ह्राह्रींह्रा २ डक्षघ—विमाता ३ डक क्षमरख—गजा । ४ ह्रा—फ्राम्रातु, सघरख–अफन–फान ह्र ।

क्षिप्त्वाऽपे देवताया विविधेनुपहितैस्तत्र गीतैः सुमंत्रैः ।
कुर्याद्रक्षां समीक्ष्य क्षणमिव विलयं याति दुष्टग्रहार्तिः ॥ ”
नीराजनमंत्रोद्धारो नारायणीये
“ ब्रह्मा विष्णुश्च रुद्रश्च स्कंदो वैश्रवणस्तथा । रक्षंतु त्वरितं बालं मुंच मुंच कुमारकं ॥ ”
५ कालगुणोत्तरे
“ पलाशाश्वत्थकपित्थबिल्वोदुंबरपल्लवाः । पंचभंगाः स्मृता ह्येते बालानां हितकारकाः ॥
“ स्नापितं भूषितं बालं ततो मुंचति सा ग्रही ” । प्रयोगसारेऽपि
“ पलाशोदुंबराश्वत्थबिल्वन्यग्रोधपल्लवाः । क्वथितेन कषायेन परिषिंचेत्प्रशांतये ॥ ” परिषिंचेत्
स्नापयेदिति मदनः । अत्र मंत्रः । ॐनमश्चामुंडे इत्यादिर्बलिदाने पूर्वमुक्तः । रक्षामंत्रः प्रयोगसारे
१० “ रक्ष रक्ष महादेव नीलग्रीव जटाधर । ग्रहैस्तु सहितो रक्ष मुंच मुंच कुमारकं ॥” अमुं
मंत्रं भूर्जपत्रे विलिख्य तत्पत्रं भुजे बध्नीयादिति मदनः । बालकशिरःस्पर्शपूर्वकं जपे मंत्र
उक्तः प्रयोगसारे ॐसर्वमातर इमं ग्रहं संहरंतु हुं रोदय । स्फोटय २ । स्वाहा गर्ज २ सर २
गृह्ण२ आमर्दय २ हिम २ हन २ एवं सिद्धि रुद्रो ज्ञापयति स्वाहा । अत्र होमोऽपि प्रयोगसारे
१५ ॐकूष्मांडि भगवति सुरागिणि सुमंडिते मुंच २ दह २ पच २ सर २ गच्छ २ स्वाहा ।
“ कृत्वा चतुष्पथे कुंडं मंत्रेणानेन मंत्रवित् । त्रिरात्रं पंचरात्रं वा सहस्रं जुहुयात्तिलैः ॥
“ शांतिं दुष्टग्रहाः शांतिं बलिना यानुमोदिताः ” बालरोदनपरिहारार्थं यंत्रमुक्तं
प्रयोगसारे षडस्रमध्ये ह्रींकारस्तन्मध्ये शिशोर्नाम विलिख्य षट्सु अस्रेषु ॐलुलुवस्वाहेति
मंत्रस्य षडक्षराणि विलिख्य तद्बहिरेव द्वितयं विलिख्य तद्बहिरघोमुखैरर्द्धचंद्रैरावेष्ट्य पंचोपचारैः
२० संपूज्य बालहस्ते बध्नीयादिति ।
अथ बालग्रहस्तवः प्रयोगसारे
“ प्रणम्य शिरसा शांतं गणेशानंतमीश्वरं । बालग्रहस्तवं वक्ष्ये समस्ताभ्युदयप्रदं ॥
“ तपसा यशसा दीप्त्या वपुषा विक्रमेण च । निर्दिष्टो यः सदा स्कंदः स नो देवः प्रसीदतु ॥
“ रक्तमाल्यांबरधरो रक्तगंधानुलेपनः । रक्तादित्योज्ज्वलः शांतः स नो देवः प्रसीदतु ॥
२५ “ यो नंदनः पशुपतेर्मातॄणां पावकस्य च । गंगोमाकृत्तिकानां च स नो देवः प्रसीदतु ॥
“ देवसेनापरिवृतो देवसेनार्चितः सदा । देवसेनापतिः श्रीमान् स नो० ।
“ शक्तिः शक्तिधरापूः कुमारः शिखिवाहनः । सुरारिहा महासेनः स नो० ॥
“ प्रकृत्या सुंदरो दांतो देवैश्वर्योदयान्वितः । नानाविनोदसंपन्नः स नो० ॥
“ प्रबोधा सुप्रबोधा च बोधना सुप्रबोधना । प्रबुद्धा च प्रबोधा च सुधीता सुमनास्तथा ॥
३० “ मनोन्मनीति विख्याता योगिन्यः पांतु बालकं । सुव्रता रुक्मिणी चैव मंदवेगा विभीषणा ॥
“ विद्युज्जिह्वा महानासा शतानंदा तथा परा । बालदा प्रमदा चेति योगिन्यः पांतु बालकं ॥

१ ङ–मंत्र । २ ङ–बहिर्निमित्र द्वितयं; ङदद्यव—द्वितयं; अघसर–वाहेर्थैः; ङ–इंद्रे ३ ङ–याफि २ घस–प्रकार ङ–शक्तिधरः; ङय–शाके.

" हरिणी चाथ वाराही वानरी क्रोष्टुकी तथा । कुबेरी कोटराक्षी च कुंभकर्णा च चंडिनी ॥
" बलादिकारिणी चेति योगिन्यः पांतु बालकं । शुद्धाविशुद्धा श्रद्धा च योगसिद्धा मितंवदा ॥
" सुभगा शुभदा गौरी बलाविकरणीति च । नानाविज्ञानविख्याता योगिन्यः पांतु बालकं ॥
" लंबा प्रलंबा च तथा लंबकर्णा च लंबिका । ज्वालाकराली कालिंदी कालिकेति यथोदिताः ॥
" स्वच्छंदाचारसंपन्ना योगिन्यः पांतु बालकं । प्रणीता सुप्रणीता च मालिनी विश्वमालिनी ॥ ५
" विमला कमला माली लोला रौद्री च विश्वदा । विचरंत्यो यथाकामं योगिन्यः पांतु बालकं ॥
" वायुवेगा महावेगा सुवेगा वेगवाहिनी । शशिनी हंसिनी हृष्टिः पुष्टिः पौष्टिकसिद्धिदा ॥
" विध्यानुभावा वाहिन्यो योगिन्यः पांतु बालकं । भ्रमिनी भामिनी नित्या निर्भिन्ना सुभगा गुहा ॥
" क्लेदिनी द्राविणी वामा योगिन्यः पांतु बालकं । रुद्रशक्तिविनिष्क्रांतमेकाशीतिक्रमोदितं ॥
" योगिनीवृंदमेतद्धि सिद्धविद्याधरार्चितं । स्कंदग्रहाधिदैवं तद्बालकं पांतु सर्वदा ॥ १०
" शकुनी रेवती देवी शिखा च मुखमंडिका । प्रलंबा पूतनाख्या च कटपूतनिका पुनः ॥
" विजया गोमुखी धूम्रा मुंडमाला तथापरा । अघोर्लबा च पद्मा च कुमुदाऽथ चांबिका ॥
" मानिनी चैव काली च देवी प्रेतमुखी तथा । ऐंद्री मार्जारिका भूयः कुरुणी च शुभा कृशा ॥
" कालरात्रिश्च माया च लोहिता पिलिपिचिका । भीतारणी चक्रवादा भीषणा दुर्जयापरा ॥
" तापनी कटकोली च मुक्तकेशी महाबला । अहंकारी जया तद्वदजमेषा त्रिदंडिका ॥ १५
" रोदनी मुकुटाभिख्या ललाटा पिंगला तथा । शीतला वालिनी चैव तापसी पापराक्षसी ॥
" मानसाधनदा देवी बलानावर्त्तिनी तथा । यमुना जातवेदा च मानिनी कलहंसिनी ॥
" बालिका देवदूती च वायसी यक्षिणी तथा । स्वच्छंदा पालिका चैव वासिनी चांबिकेति च ॥
" पंचाशच्च कुलोत्पन्नाश्चतुष्षष्टिसमीरिताः । योगिन्यो नित्यसंतुष्टाः स्कंदापस्मारदेवताः ॥
" नानारक्षाधिकारस्था बालकं पांतु सर्वदा । महालक्ष्मीर्महातंगा महासेना महाबला ॥ २०
" महाकंपा महाभीमा महातेजा महोत्सवा । महासेना महाचंडा मोहिनी वीरनायका ॥
" एकवीरा-विशालाक्षी-सुकेशी-सुमनास्तथा । सुकेशिनी च संतुष्टा दंडिनी च विलंबिनी ॥
" भामिनी चाथ सौवर्णी सिंहवक्त्रा कटंकिनी । भ्रमरा चंचला चंपा सिद्धिदा च तथापरा ॥
" शातोदरी धृतिः स्वाहा स्वधाख्या च सनातनी । शंबरा च तथा देवी नीलग्रीवा तथांबिका ॥
" वितला गंधिनी वामा क्रीडंती चैव वाहिनी । कर्षिणी मालती फुल्ला कालकर्णी च चंडिका ॥ २५
" चित्रानना गुहा चेति पार्वती संगतिर्गता । पंचाशत्त्रयसंपन्ना शकुनी दैवतप्रिया ॥
" योगिन्यः कामरूपिण्यो बालकं पांतु सर्वदा । विश्वंतपा प्रभावज्ञा सर्वज्ञा सर्वगा गुहा ॥
" दुर्गा सरस्वती ज्येष्ठा श्रेष्ठा पद्मा परापरा । प्रमदा रोहिणी शीता प्रव्ही प्रह्लादिनी विभा ॥
" विभूतिर्विततिः प्रीतिः प्रकृतिप्रमतिर्यथा । एता भगवता सृष्टा योगिन्यो योगसिद्धिदाः ॥
" पंचविंशतिराख्याता रेवतीशक्तिगोचरा । जगदाप्यायनकरा बालकं पांतु सर्वदा ॥ ३०
" नंदश्चैवोपनंदश्च गोमतिः सुमतिस्तथा । विद्युज्जिह्वो महाकालः करालस्तिमिलोचनः ॥
" तेजहोद्रा विरूपाक्षो गोमुखो वडवामुखः । कालाननः करालश्च शंकुकर्णो विभीषणः ॥
" एते शकुंदनोत्पन्ना वीराः षोडश राक्षसाः । पूतनादेवताजुष्टा बालकं पांतु सर्वदा ॥

" वज्रिणी शक्तिनी चाऽन्या दंडिनी खड्गिनी तथा। पाशिनी ध्वजिनी देवी गदिनी शूलिनी परा।
" पविनी चक्रिणी चेति सर्वाकारा भयप्रदाः। एता दिग्विदिशां देव्यो योगिन्यो देवकीर्तिताः।
" अधिभूतप्रधाना या पायात्सा शांतपूतना। प्रसन्ना मातरः सर्वा बालकं पांतु सर्वदा ॥
" अर्यको जलको भूमा उग्रः स्कंदश्च कीर्तितः। वीरेशाः पितृभिः सुष्टा नैजमेषाधिदेवताः ॥
५ " पंचशक्तिप्रधानास्ते बालकं पांतु सर्वदा।
" भैरवा वीरमाता च क्षेत्रपाला विनायकाः। डाकिन्यो रुद्रशाकिन्यो यक्षरक्षांसि पन्नगाः ॥
" वराश्चांतरा भूता मनुष्याः पशवो मृगाः। सरीसृपाश्च संतुष्टा बालकं पांतु सर्वदा ॥
" आदित्या वसवो रुद्राः पितरो मरुतस्तथा। मुनयो मनवः काला ग्रहयोगाः सनातनाः ॥
" सिद्धाः साध्याश्च गंधर्वा देव्यश्चाप्सरसां वराः। विद्याधरा महादेव्या बालकं पांतु सर्वदा ॥
१० " सहजा योगजा चैव वीरजा मंत्रजा तथा। योगिन्यो योगवनिता नानाविभवगोचराः ॥
" भवानी नाम संतुष्टा बालकं पांतु सर्वदा। भूर्लोके च भुवर्लोके स्वर्लोके याश्च मातरः ॥
" अधश्चोर्ध्वं च तिर्यक् च क्रीडंत्योऽनंतमूर्तयः। प्रसन्नयोगसंपन्ना दिव्यैश्वर्यसमन्विताः ॥
" स्वछंदपदसंभूतैर्भवैः परिवारिताः। रक्षंतु बालकं प्रीताः शांतिर्भवतु चेतसा ॥
" दिव्यं स्तोत्रमिदं पुण्यं बालरक्षाधिकारकं। जपेत्संतानरक्षार्थं बालद्रोहोपशांतिदं ॥ "
१५ इति बालस्तवः ॥

इदं च स्तवांतं कृत्यमाद्यमासवर्षयोर्द्वितीयादिदिनमासवर्षेष्वपि कार्यं। विशेषस्तूच्यते कुमारतंत्रे
" प्रथमे दिवसे मासे वर्षे वा योगिनी तदा। अथवा नंदिनी नाम्ना पूतनाकमते शिशुं ॥
" तद्गृहीतस्य बालस्य ज्वरः स्यात्प्रथमं ततः। गात्रशोषश्च वैवर्ण्यं नाहारेच्छा मुहुः भवेत् ॥
" छर्दिर्मूर्छा च कंपश्च हीनज्वरयुतस्तदा। विधानं तत्र वक्ष्यामि येन मुंचति पूतना ॥
२० " नदीमृत्तिकया कुर्याच्छोभनां पुत्रिकां ततः। शुक्लोदनं शुक्लगंधस्तथा शुक्लानुलेपनं ॥
" शुक्लपुष्पाणि वै पंचध्वजाः पंचप्रदीपिकाः। स्वस्तिकाः पंचपूर्वाण्हे पूर्वस्यां दिशि संयतः ॥
" बलिं दद्यादघोशीरसितसर्षपमेव वा। शिवनिर्माल्यमार्जारनकेशाविंबपत्रकं ॥
" गव्यं घृतं चेत्येतेन धूपयेच्चैव बालकं। एवं दिनत्रयं कृत्वा चतुर्थे शांतिवारिणा ॥
" स्नापयेद्बालकं पश्चाद्भोजयेच्चापि भिक्षुकं। क्षीरेण भोजयेदेवं सुस्थो भवति बालकः ॥ "
२५ शांतिवारिणेति 'शन्न इंद्राग्नी शचो वात' इत्यादिकैः स्वस्वशाखापाठितैर्मंत्रैरभिमंत्रितं वारि शांतिवारि। अथवा वक्ष्यमाणमंत्रेण शतकृत्वोऽभिमंत्रितं वारि शांतिवारि।
" द्वितीयदिवसे मासे हायने वा सुनंदना। गृह्णाति पूतना बालं योगिनी स्वस्तनापि वा ॥
" ततो भवेज्ज्वरः पूर्वं संकोचो हस्तपादयोः। दंतान्प्रखादत्यनिशं निमीलयति चक्षुषी ॥
" आहारं च न गृह्णाति दिवारात्रं च रोदिति। अक्षिरोगं छर्दनं च भवेद्भीतिः पुनःपुनः ॥
३० " कृशत्वं च प्रजायेत इत्येतच्छिशुलक्षणं। तंडुलप्रस्थपिष्टेन विनिर्माय पुत्रिकां ॥
" त्रयोदशध्वजा दीपाः स्वस्तिकाश्च बलोदना। प्रस्थप्रमाणपिष्टेन सिद्धाण्पाश्च मत्स्यकाः ॥

१ ह-वेताला। २ क्ष-वरा। ३ अज्ञान-तथा। ४ ह्र दद्योश्चवसर्षपोशीरसेव वा। ५ ह-बालक।

" मांसं चेत्येतद्बलिं पश्चिमायां दिशि क्षिपेत् । पश्चिमायां च संध्यायामेतद्ध्यादिनत्रयं
धूपशांतिस्नानब्राह्मणभोजनानि पूर्ववत् ।
" तृतीये दिवसे मासे वर्षे वा पूतनाभिधा । गृण्हीयाद्योगिनी बालं ततः पूर्वं ज्वरो भवेत् ॥
" प्रस्थप्रमाणपिष्टेन पुत्रिकां कारयेत्ततः । रक्तौदनं ध्वजो रक्तः स्वस्तिको रक्त एव च ॥ ५
" रक्तपुष्पं रक्तगंधस्तथा रक्तानुलेपनं । पश्चिमायां च संध्यायामुदीच्यां निक्षिपेद्बलिं ॥
धूपशांतिस्नानब्राह्मणभोजनानि पूर्ववत् ।
" चतुर्थेऽहनि मासे तु वर्षे गृण्हाति बालकं । तुषमंडनिका नाम पूतना चाथ योगिनी ॥
" भीषणाख्या ततस्तस्य जायते प्रथम ज्वरः । गात्रभंगो स्थितिर्मूर्द्धा वैवर्ण्यं चाक्षिमीलनं ॥ १०
" वैकल्यं श्यामता श्वासः कासोऽरुचिरिरीमितं । तिलपिष्टमयीं कृत्वा पुत्रिकां बिल्वकंटकैः ॥
" अष्टांगं रचयेत्पुष्पयुक्तं शुक्लध्वजोऽर्जुनः । स्वस्तिकोर्द्धप्रस्थसिद्धं भक्तं ताद्वदपूपकाः ॥
" त्रिसंध्यं पश्चिमाशायां बलिं दद्यात्प्रयत्नतः । "
ताद्वदपूपका इति अर्द्धप्रस्थपरिमितेनान्नेन कृता इत्यर्थः ।
" गोशृंगं सर्पनिर्मोकं लशुनं निंबपत्रकं । मनुष्यकेशमार्जारलोमाज्याजघृतं तथा ॥ १५
" एतैश्च धूपयेदेकनिशि संध्यात्रयेऽपि च । एकनिशि एकस्मिन्नेव दिने बलिरित्यर्थः । शांतिस्नान-
मंत्रब्राह्मणभोजनानि च पूर्ववत् ।
" पंचमे दिवसे मासे वर्षे वा पूतना शिशुं । बिडालिकाख्या गृह्णीयात्प्रथमं जायते ज्वरः ॥
" हिक्का श्वासश्च शूलं च गात्रभंगो ह्यरुचिस्तथा । तंडुलप्रस्थपिष्टेन निर्मायायोरुपुत्रिका ॥
" शुक्लौदनं ध्वजाः पंच स्वस्तिकाः पंच चोज्ज्वलाः । पंचदीपास्तुशुक्लानि कुसुमानि च चंदनं ॥ २०
"अपराह्णे वृक्षमूले पश्चिमायां दिशि क्षिपेत्॥" धूपस्तुगोशृंगं लशुनमित्यादिक । शांतिस्नानमंत्र-
ब्राह्मणभोजनानि च पूर्ववत् ।
" षष्ठेऽहनि तथा मासे हायने चापि बालकं । पूतना शकुनिर्नाम गृण्हीयात्तदनंतरं ॥
" ज्वर उद्वेजनं गात्रे शोषः श्वासोऽरुचिस्तथा । कासश्च हस्तपादाक्षिसंकोचश्चेति लक्षणं ॥
" तंडुलप्रस्थपिष्टेन विनिर्मायाथ पुत्रिकां । कृष्णौदनं ध्वजाः पंचकृष्णाः स्वस्तिकपंचकं ॥ २५
" कृष्णमेवाथ मत्स्योश्च पायसं दुग्धमेव च । मांसं चापूपकास्त्वर्द्धप्रस्थपिष्टविनिर्मिताः ॥
" अपराह्णे पश्चिमायां निक्षिपेद्बलिपुत्रिकां । पुत्रिकां पूर्ववत्कृत्वा पललं शूलपाचितं ॥
" मत्स्याः पर्पटिकाश्चैव रक्तं च प्रस्थसंमितं । उदीच्यां पूर्वसंध्यायां बलिर्देयः प्रशांतये ॥ "

अत्र बलिदानयोर्विकल्पः । तयोरेव कालयोर्बालकस्य धूपो देयः गोशृंगलशुनमित्यादिकः । ३०
तथा शांतिस्नानं ब्राह्मणभोजनं च । बलिदानपूजायां मंत्रस्तु । ' ॐ रुद्ररुद्रस्वाहा ' ।
" सप्तमे दिवसे मासे वर्षे वा शुष्करेवती । गृण्हाति पूतना बालं ततः स्यात्प्रथमं ज्वरः ॥
" गात्रभंगोऽथ विद्वेषः आहारे कंपरोदने । इत्येतल्लक्षणं तत्र बलिर्देयः प्रशांतये ॥
" प्रस्थसम्मितपिष्टेन सम्यक् कृत्वाऽथ पुत्रिकां । सप्तध्वजाः सप्तदीपाः स्वस्तिकाः सप्त वै तथा ॥

१ ट-नर्वे । २ दस्थ-स्य । ३ हरस-ॐ रुद्र स्वाहा । ४ नाट युक ।

" पुष्पाणि मत्स्यमांसं च भक्तं चैतंदुद्धाहरेत् "। धूपस्तु गोशृंगलशुनमित्यादिकः । शांतिस्नानं ब्राह्मणभोजनं । मंत्रस्तु ' ॐह्रीं फट् स्वाहा ' ।

" अष्टमे दिवसे मासे वर्षे चाक्रमते शिशुं । विडालिका नामधेया पूतनाऽस्य ततो ज्वरः ॥

" गात्रभेदोऽत्र छर्दितं रोदनं नेत्रमीलनं । जिव्हाशोषः शिरस्फोटं आहारद्वेष एव च ॥

" अक्षिरोगो भवेदेतर्हिंगितं तद्ग्रहाच्छिशोः । तंडुलप्रस्थपिष्टेन पुत्तलीं कारयेत्ततः ॥

" पायसं मधुसर्पिश्च क्षीरलाजाश्च शष्कुली । गुग्गुलुं मेषमांसं च तथा पर्पटिका अपि ॥

" ध्वजा दीपाश्च चत्वारो गंधा नानाविधा अपि । सुमनांसि च रक्तानीत्येवं मंत्रोदितो बलिः ॥"

" अमुं समाहरेत्पूर्वं संध्यायां दक्षिणादिशि । कृष्णाष्टम्यां वक्ष्यमाणमंत्रेणानेन संयतः ॥ ॐनमो नारायणाय त्रैलोक्यविद्रावणाय । ॐह्रीं फट स्वाहा । अनेनैव च मंत्रेण पूजादि बलिहरणांतं

१० कर्म कुर्यात् । धूपस्तु गोशृंगलशुनमित्यादिकः । शांतिस्नानं ब्राह्मणभोजनं च । अत्र कृष्णाष्टम्यां बलिहरणमिति न नियमार्थं किंतु सति संभवे प्राशस्त्यार्थं । अन्यथा तत्प्रतीक्षायां शिशुविनाशापत्तेः।

" नवमे दिवसे मासे हायने वाऽपि बालकं । गृण्हाति सुनन्दा नाम्नी पूतना तदनंतरं ॥

" ज्वरच्छर्दिर्विणाध्मानं कासश्वासश्च तृष्णता । गात्रभंगश्च शूलं च चिन्हान्येतानि बालके ॥

" प्रस्थमात्रेण पिष्टेन विनिर्माय च पुत्रिकां । ओदनं मत्स्यमांसं च पर्पटीं चेक्षुमूलिकां ॥

१५ " निक्षिपेत्पूर्वसंध्यायामुत्तरस्यां बलिं दिशि । अत्र मंत्रः । ॐनमो भगवते वासुदेवाय कृष्णमंडले बलिमादाय हर हुं फट् स्वाहा । धूपस्तु गोशृंगलशुनमित्यादिकः । शांतिस्नानं ब्राह्मणभोजनं च ।

" दशमे दिवसे मासे हायने वाऽथ बालकं । पूतना रेवती नाम्नी गृण्हीयाद्बालकं ततः ॥

" ज्वरः छर्दिः कासश्वासौ शूलं चेत्येतदीरितं । यत्र द्वेषश्च तत्रायं बलिर्देयो विचक्षणैः ॥

२० " प्रस्थप्रमाणपिष्टेन पुत्रिकां तत्र कल्पयेत् । अष्टांगं लेखयेत्तत्र बिल्ववृक्षस्य कंटकैः ॥

" गुडोदनं च सर्पिश्च ध्वजानां पंचविंशतिः । स्वस्तिकानां प्रदीपाना पंचविंशतिरेव च ॥

" चत्वारि रक्तपुष्पाणि होतद्दक्षिणादिग्गतः । संध्यात्रये वक्ष्यमाणमंत्रेणानेन निक्षिपेत् ॥- ॐ नमो भगवते वासुदेवाय हन हुं फट् स्वाहा । धूपो गोशृंगलशुनमित्यादिकः । शांतिस्नानं ब्राह्मणभोजनं च ।

२१ " एकादशदिने मासे हायने पूतनार्चिका । गृण्हाति बालकं पश्चाज्ज्वरस्तस्य प्रजायते ॥

" अन्नद्वेषो मुखे शोषो गात्रभंगश्च रोदनं । ऊर्ध्वदृष्टिरपीत्येतल्लक्षणं तद्ग्रहाच्छिशोः ॥

" पुत्रिका माषपिष्टेन रचित्वा शुक्लोदनं । पुष्पाण्यपि च शुक्लानि ध्वजाना पंचविंशतिः ॥

" स्वस्तिकानां प्रदीपानां पंचविंशतिरेव च । एतत्सर्वं यथाशाया संध्यायां प्रातराहरेत् ॥ अत्र मंत्रः । ॐ नमो भगवते ताराय चंद्रहासत्रलहस्ताय ज्वलदुष्टग्रहाय ॐ फट् स्वाहा ।-

२५ धूपस्तु गोशृंगलशुनमित्यादिकः । शांतिस्नानं ब्राह्मणभोजनं च । प्रथमदिवसमासवर्षगृहीतपूतनाहरोक्तं द्रष्टव्यं ।

" द्वादशे दिवसे मासे वर्षे या पूतना शिशुं । अद्भुताख्या प्रगृह्णाति ज्वरः स्यात्प्रथमं ततः ॥
" रोदनं सर्वदा दंतखादनं रक्तनेत्रता । रोमांचसतापं इत्येतदखिलं तस्य लक्षणं ॥
" तंदुलप्रस्थपिष्टेन कृत्वा तन्नामपुत्रिकां । त्रयोदश स्वस्तिकांश्च ध्वजा दीपांस्त्रयोदश ॥
" अपूपा मत्स्यमांसं च तथा पर्पटिका अपि । एतत्सर्वं दक्षिणस्यां दिशि मंत्रेण निक्षिपेत् ।
मंत्रस्तु । ॐ नमो नारायणाय प्रज्वलद्वज्रहस्ताय हर ■ शोषय २ मर्दय २ पातय २ हन 5
हन दुष्टसत्वानां हुं फट् स्वाहा । गोशृंगमित्यादिको धूपः । शांतिस्नानं ब्राह्मणभोजनं च ।

अथ बौधायनोक्ता ज्वराद्युत्पत्तौ शांतयः । प्रतिपदि कष्टं संदेहो वा दिनान्यष्टादश । अग्निर्देवता अग्निरस्मीति पूजामंत्रः । हैमी प्रतिमा । घृतधूपो घृतदीपश्च । यथासंभवं नैवेद्यं घृतं होमद्रव्यं शांतिर्भवति । अत्र सर्वत्र प्रथमं तत्तत्तिथिदेवतामंत्रजपः सहस्रादिसंख्याकः । पश्चात्पूजा-होमदानादि होमसंख्या चाष्टोत्तरशतादिव्याधितारतम्येन कल्प्या । सहस्रं मृत्युनिर्देशो द्वितीयायां 10 दिनानि षोडश । ब्रह्मा देवता ब्रह्मजज्ञानामिति जपपूजाहोममंत्रः । अगुरुर्धूपः । घृतदीपः । सर्वत्र शर्करान्नैवेद्यं । तिलयवाज्यानि होमद्रव्यं । प्रतिमा च हैमी । तृतीयायां दिनानि नव । पार्वती देवता । गौरीर्मिमायेति मंत्रः । दूर्वाभिः पूजा । कुंकुमधूपः । गुग्गुलुर्वा धूपो घृतदीपः । द्राक्षाक्षीराज्यं नैवेद्यं पायसं त्रिमधुराक्तं । दूर्वाश्च होमद्रव्यं । प्रतिमा हैमी । चतुर्थ्यां दिनानि षोडश । गणपतिर्देवता । गणानां त्वेति पूजाहोमादिर्मंत्रः । हैमी प्रतिमा । कुंकुमरक्तचंदनं गंधः । करवीरादीनि पुष्पाणि । अगुरुर्धूपो 15 घृत दीपो लड्डुका इक्षुखंडानि नैवेद्यं । नारिकेरशकलानि कदलीफलानि च होमद्रव्यं । पंचम्यां दिनान्येकविंशतिर्नागा देवताः । हैमी प्रतिमा । नमोस्तु सर्पेभ्य इति मंत्रः । चंदनं गंधः । सुरभि पुष्पाणि । घृतधूपः । पयोनैवेद्यं । तिलयवाज्यपायसशर्करामधूनि यथायोगं होमद्रव्यं । षष्ठ्यां दिनानि द्वादश । स्कंदो देवता । 'इन्द्रस्थस्कंदेति' पूजामंत्रः । पीतं चंदनं रक्तं वा गंधः । रक्तानि पुष्पाणि जातीपुष्पाणि वा । जटामांसी धूपः । लड्डुकादि नैवेद्यं । फलानि वा । तिलयवाज्यं होमद्रव्यं । 20 हैमी प्रतिमा । शांतिर्भवेति । सप्तम्यां दिनान्यष्टौ । दिननाथो देवता । आसत्येन आकृष्णेनेति वा मन्त्रः । हैमी ताम्रजा ■ प्रतिमा । कुंकुमं गंधः । करवीरादीनि पुष्पाणि । गुग्गुलो धूपः । शर्कराघृत-संयुतं पायसं । नानाफलानि च नैवेद्यं । अर्कसमिधः पायसं होमद्रव्यं । अष्टम्यां दिनानि त्रयोदश । ईश्वरो देवता । तमीशानामिति पूजामंत्रः । राजती प्रतिमा । कर्पूरमिश्रितं चंदनं गंधः । बिल्व-दलानि अर्कपुष्पाणि नीलोत्पलानि च पुष्पाणि । जटामांसी धूपः । पायसं नाना भक्ष्याश्च 25 नैवेद्यं । मधुराक्तास्तिला होमद्रव्यं । सांगशांतिर्भवति । नवम्यां दिनान्यष्टादश । भगवती दुर्गा देवता । 'जातवेदसे' इति पूजामंत्रः । हैमी प्रतिमा । रक्तं चंदनं गंधः कुंकुमादिकं वा । जपाकुसुमादिकं पुष्पं । गुग्गुलुर्धूपः । घृतपक्वं नैवेद्यं । त्रिमधुराक्तं पायसं होमद्रव्यं । देव्यै दधिभक्तपात्रदानं तद्भक्ताय वा । दशम्यां दिनानि पंचविंशतिः । यमो देवता । हैमी लौही वा प्रतिमा । यमाय त्वेति पूजामंत्रः । चंदनं मृगमदश्च गंधः । मधुसर्जरसश्च धूपः । तिलतैलदीपः । बिल्वपत्राणि कृष्णतिलाश्च पूजाद्रव्यं । 30 कृशरान्नं नैवेद्यं । घृतं मधुतिलमुद्गा होमद्रव्यं । एकादश्यां दिनानि सप्त । विश्वेदेवा देवता । विश्वे देवास इतिमंत्रः । हैमी प्रतिमा । श्वेतचंदनगंधः । कृष्णागुरुधूपः । घृतदीपः । तुलसीपत्राणि । पूजायां

---

१ ऋ. सं. १।४।७ । २ ह्य नष्ट ।

मंत्र। मोदकं नैवेद्यं। तिलयवमध्वाज्यं होमद्रव्यं। द्वादश्यां दिनानि दश। रुद्रो देवता। या ते रुद्रेति मंत्रः। हैमी प्रतिमा। चंदनं श्रीखंडं। अगुरुर्धूपो घृतदीपः। पायसं नैवेद्यं। चंपकं पुष्पं। कमलं वा [1] पूजायां तिलयवाज्यव्रीहिमधूनि होमद्रव्यं। शांतिर्भवति। त्रयोदश्यां दिनान्यष्टौ। शशी देवता। रौक्मी राजती वा मूर्तिः। आप्यायस्वेति मंत्रः पूजादौ। श्वेतचंदनं गंधः। चंदनधूपः। घृतदीपः। दधिशर्करा-
५ नैवेद्यं। तिलयवाः त्रिमध्वाक्तहोमद्रव्यं। शांतिर्भवति। चतुर्दश्यां दिनानि द्वात्रिंशतिः। शंभुर्देवता। शं नः करायेति मंत्रः। रौक्मी राजती वा मूर्तिः। श्वेतचंदनं गंधः। अर्कपुष्पं बिल्वदलानि वा। अगुरुर्धूपः। पायसं नैवेद्यं। त्रिमध्वाक्तास्तिला होमद्रव्यं। अमायां दिनान्यष्टादश। शची देवता। होतायक्षदिति मंत्रः। हैमी प्रतिमा। कुंकुमादि गंधः। नानासुगंधपुष्पाणि कृष्णागरुर्धूपः फेणिकापूरिकादि नैवेद्यं।' शर्कराघृतपायसं होमद्रव्यं। पूर्णिमायां दिनानि षोडश। चंद्रो देवता। दमनकं पूजार्थमन्यत्सर्वं
१० त्रयोदशीशांत्युक्तं ग्राह्यं। इति तिथिदोषशांतिः॥

## अथाश्वलायनोक्ता वारशांतिः

आदित्यवारस्य रुद्रो देवता या ते रुद्रेति मंत्रः। हैमी राजती वा मूर्तिः। चंदनं गंधः। अगुरुर्धूपः घृतदीपः। पायसं नैवेद्यं। होमद्रव्यं च। सोमवारस्य पार्वती देवता। गौरीर्मिमायेति मंत्रः हैमी राजती वा मूर्तिः कुंकुमगंधः सुगंधि पुष्पं। अगुरुधूपः। घृतदीपः। नानाभक्ष्याणि नैवेद्यं तिल-
१५ यवाहोमद्रव्यं। देवभक्तसंतर्पणं च। भौमस्य स्कंदो देवताऽन्यत्सर्वं षष्ठीशांतिवत्। बुधवारस्य विष्णुर्देवता। 'विष्णोरराटमसीति' मंत्रः। हैमं स्वरूपं। पीतचंदनं। पीतपुष्पाणि। कमलानि च। अगुरुर्धूपो घृतदीपः। यवलड्डुका नैवेद्यं। तिलयवाज्यहोमः। गुरुवासरस्य ब्रह्मा देवता। 'ब्रह्मजज्ञानमिति' मंत्रः। हैमी प्रतिमा। कुंकुमगंधः। पर्णपुष्पं। गुग्गुलुर्धूपः। शर्कराज्यं नैवेद्यं। तिलयवधानाघृतं होमद्रव्यं। शुक्रवासरस्य इंद्रो देवता। त्रातारमिंद्र-
२० मिति मंत्रः। हैमी राजती वा मूर्तिः। चंदनं गंधः। चंपकं पुष्पं। अगुरुर्धूपः। घृतपक्वं नैवेद्यं। तिलयवाज्यमधूनि होमद्रव्यं। शनिवासरस्य यमो देवता। 'यमेन दत्तमिति' मंत्रः। हैमी लौही वा मूर्तिः। ताम्रजेति केचित्। चंदनं गंधः। पुष्पं कृष्णं। मधु धूपः। तिलतैलदीपः। मधुमत्स्याश्च नैवेद्यं। तिला मधु च होमद्रव्यं शांतिर्भवति। इति वारशांतयः॥

### अथ नक्षत्रशांतयः।

२५ वृद्धवसिष्ठः

" रोगशांतिं प्रवक्ष्यामि रोगार्त्तानां शरीरिणाम्। बलिपूजाग्रहहोमैश्च जपब्राह्मणभोजनैः॥
" यस्मिन् धिष्ण्ये यदा नृणां रोगः संजायते तदा। तद्धिष्ण्यपूजा कर्त्तव्या तत्तदीश्वरतुष्टये॥
" सुवर्णेन प्रमाणेन तदर्द्धार्द्धेन वा पुनः। धिष्ण्येशप्रतिमा कल्प्या यथावित्तानुसारतः॥
" ईशान्यामथ वा प्राच्यामुदीच्यां दिशि संलिखेत्। तंडुलोपर्यष्टदलं पद्मं गोमयमंडले॥
३० " पंचामृतैः सलेपैश्च तत्तन्मत्रैः पृथक् पृथक्। स्नाप्य कल्पोक्तमंत्रेण प्रतिमां स्थापयेत्पुनः॥
" कर्णिकायां सुसंस्थाप्य ध्यात्वा देवं समर्चयेत्। तद्वर्णवस्त्रगंधाद्यै रक्तधूपोपहारकैः॥

---

१ ऋ. सं. १।६।२२। २ ऋ. सं. २।२।४। ३ ऋ.सं. २।३।२२। ४ ऋ. सं. ८।७।३२। ५ उक्त—मघुनी। ६ ऋ. सं. २।३।११। ७ स—आश्व।

" आरक्तवर्णं कुम्भं च पञ्चत्वक्पल्लवैर्युतं । शुक्लवस्त्रस्वर्णरत्नसर्वौषधिसमन्वितं ॥
" मृत्पञ्चगव्यसद्बीजफलक्षौद्रकुशान्वितं । देवस्य पूर्वतः स्थाप्य जलमंत्रैः समर्चयेत् ॥
" प्रतीच्यां स्थण्डिले वह्निं विधिवत्स्थापयेत्ततः । मुखांते जुहुयादुक्तद्रव्येणाष्टसहस्रकं ॥
" तिलहोमं व्याहृतिभिरष्टोत्तरसहस्रकं । पूर्णाहुतिं च जुहुयात्सम्यक्जपादिपूर्वकं ॥
" ततः शुद्धोपविष्टस्य रोगिणः प्राङ्मुखस्य च । मंत्रपूतैः कुम्भजलैरब्लिङ्गैर्वारुणैर्मंत्रकैः ॥ ५
" मार्जनं कारयेत्तस्य सम्यक् संकल्पपूर्वकं । नीराजनं च शुद्धात्मा पूजास्थानं समागतः ॥
" देवं हुताशनं भक्त्या प्रणम्य प्रार्थयेदिति ॥
" अमृतोद्भव धिष्ण्येश यतस्त्वं शंकरात्मकः । रोगादस्माच्च मां रक्ष तव वश्यश्च धिष्ण्यप ।
" इति प्रार्थ्य ततो दद्यात्प्रतिमां वस्त्रसंयुतां । दक्षिणासहितां भक्त्या आचार्याय कुटुम्बिने ॥
" ब्राह्मणाय यथाशक्त्या ब्राह्मणान् भोजयेत्ततः । कृत्वा नक्षत्रपूजांतं तिथिवासरयोरपि ॥ १०
" सर्वान्कामानवाप्नोति रोगी रोगात्प्रमुच्यते । आश्विन्यामुत्थितो व्याधिर्नवरात्रेण मुंचति ॥
" देवस्य त्वेति मंत्रस्य गायत्री कश्यपोऽश्विनौ । इवेतवर्णौ सुधापूर्णकुम्भांभोजधरौ पृथक् ॥
" चन्दनोत्पलपुष्पाज्यगुग्गुलौ तु गुडप्रियौ । क्षीरलड्डुकमाकारौ समिधः क्षीरवृक्षजाः ॥
" गुडोदनबलिं दद्याद्दीपैः सार्द्धं निशामुखे । भरण्यामुत्थितो व्याधिरचिरान्निधनप्रदः ॥
" मासेन मुच्यत्यथवा दैवस्य कुटिला गतिः । त्र्यंबकस्य मंत्रस्य प्रोक्तारुद्रर्षिदेवता ॥ १५
" गंधैगरुः करवीरं पुष्पं धूपश्च गुग्गुलः । अन्नदीपं च सर्वेषां नैवेद्यं च गुडोदनं ॥
" पाशदण्डधरो रक्तस्त्वाज्यमध्वाक्षतैर्हविः । महिषीनाथकारूढः कृसराच्च बलिं हरेत् ॥
" वक्ष्यमाणेन मंत्रेण बलिं सम्यक् प्रदापयेत् । कृत्तिकासुत्थितो व्याधिर्दशरात्रेण मुंचति ॥
" शुक्लसुधामयवरदः स्ववर्णो मेषवाहनः । मेधातिथिजगत्यग्नी पुनंतु मामित्यस्य च ॥
" चन्दनं यूथिकापुष्पं घृतदीपः सगुग्गुलः । नैवेद्यं तिलमाषान्नं वरकान्नेन संयुतं ॥ २०
" गुडोदनं हविस्तत्र पायसेन बलिं हरेत् । रोहिण्यामुत्थितो व्याधिर्दशरात्रेण मुंचति ॥
" नमो ब्रह्मणमंत्रस्य गायत्रीविधिरीश्वरः । शुक्लः कमण्डलुस्त्वक्षसूत्राभयवरप्रदः ॥
" चन्दनं कमलं पुष्पं सदशागं च गुग्गुलं । नैवेद्यं पायसं साज्यं सवदा तैर्हविर्भवेत् ॥
" दधिक्षीरघृतक्षौद्रशाल्यन्नेन बलिं हरेत् । चन्द्रभ चात्थितो व्याधिः पंचरात्रेण मुंचति ॥
" गदावरदपाणिश्च श्वेतासौ रथवाहनः । नवो नवो भवत्यस्य गायत्री गौतमः शशी ॥ २५
" चन्दनं कुमुदं पुष्पं दशागं पायसान्नं । नैवेद्यं मण्डकापूपघृतक्षौद्रसमन्वितं ॥
" शर्करादधिमिश्रेण शुक्लान्नेन बलिं हरेत् । आर्द्रायामुत्थितो व्याधिरचिरान्निधनप्रदः ॥
" मासेन मुच्यत्यथवा दैवस्य कुटिला गतिः ॥
" शुद्धस्फटिकसंकाशशूलखड्गाभयेष्टदः । नमः शंकरायेत्यस्य बृहतीशो विधी ऋषिः ॥
" चन्दनं सौरभं पुष्पं दशागं पायसोदनं । समध्वाज्यं हविस्तत्र दध्योदनबलिं हरेत् ॥ ३०
" पुनर्वसोर्भवेद्व्याधिर्नवरात्रेण मुंचति । कमण्डल्वक्षसूत्रेष्टदर्भास्रक्स्रुवभृत्सदा ॥
" अदितिर्धीश्च मंत्रस्य त्रिष्टुभो द्रुहिणोदितिः । हरिद्राकुंकुमं गंधं पुष्पं सेवन्तिकान्वितं ॥

१ क्ष—कश्यपोज । २ ऋ० सं ८।३।२३ । ३ ऋ० सं १।६।१६।

" धूपो मलयजं पिष्टं घृतान्नं पीतवर्णकं । घृताक्ततंडुलहविः पीतान्नेन बलिं हरेत् ॥
" पुष्ये समुत्थितो व्याधिः सप्तरात्रेण मुंचति । पीतो दंडकमंडल्वक्षसूत्राभयवरोद्यतः ॥
" बृहस्पते परीत्यस्य त्रिष्टुप् जीवोंगिरा ऋषिः । कुंकुमं वारिजं पुष्पं नैवेद्यं घृतपायसं ॥
" मंडकागुडसंयुक्तमेतदेव हविर्भवेत् । समंडकघृतान्नेन बलिं तत्र प्रदापयेत् ॥
५ " आश्लेषासूत्थितो व्याधिः कृशान्मासेन मुंचति । नमो अस्त्विति मंत्रस्य विराडाग्निश्च सपराट् ॥
" मधुवर्णो भोगयुक्तः खड्गचर्मधरः शुभः । सकुंकुमागरुर्गंधः पुष्पं चागस्तिसंभवं ॥
" घृतगुग्गुलधूपोऽत्र नैवेद्यं क्षीरसर्पिषा । हविः साज्यं सुद्ध्यन्न दध्योदनबलिं हरेत् ॥
" मघायां चोत्थितो व्याधिरचिरान्निधनप्रदः । अथवा सार्द्धमासेन धूम्रो दंडपवित्रधृक् ॥
" आयंतु नास्त्विति चास्य जगती पितरोऽक्षजः । चंदनं चंपकं पुष्पं धूपः सघृतगुग्गुलः ॥
१० " नैवेद्यं घृतपिष्टान्नं तिलाज्यं सघृतं हविः । सतिलान्नं च मुद्गान्नं बलिं च पितृतृप्तये ॥
" पूर्वाफाल्गुनभे व्याधिरर्द्धमासेन मुंचति । भग एव भगवानित्यस्यानुष्टुप् भगो विधिः ॥
" यथा भयंकरः पद्मवर्णः सिंहासने स्थितः । चंदनं मालतीपुष्पं बिल्वदीपो घृतोदनं ॥
" नैवेद्यं शर्करापूपलड्डुकाभिश्च संयुतं । घृतौदनं हविस्तत्र पायसेन बलिं हरेत् ॥
" अर्यमर्क्षे भवेद्व्याधिरर्द्धमासेन मुंचति । पद्मवर्णः पद्मसंस्थः पद्मगर्भसमद्युतिः ॥
१५ " अर्यमायातिमंत्रस्य अर्यमा त्रिष्टुबब्जयः । कर्पूरं कुंकुमं गंधं पुष्पं धूपकसंज्ञकं ॥
" घृतगुग्गुलधूपोऽत्र नैवेद्यं घृतपायसं । होमद्रव्यं घृतान्नं स्याच्छाल्यन्नेन बलिं हरेत् ॥
" हस्ते समुत्थितो व्याधिर्नवरात्रेण मुंचति । उदुत्यमिति हिरण्यस्तूपो गायत्र्यादित्यिति जपेत् ॥
" रक्तगंधं कुंकुमं च पुष्पं राजीवसंज्ञकं । सगंधगुग्गुलो धूपो नैवेद्यं घृतपायसं ॥
" मधुपुष्पं तिलाज्यान्न दूर्वाभिः सहितं हविः । गुडशर्करमध्वाज्यपिष्टान्नेन बलिं हरेत् ॥
२० " चित्रायामुत्थितो व्याधिर्दशरात्रेण मुंचति । चित्रं देवानामित्यस्य त्वष्टानुष्टुप् पितामहः ॥
" अक्षसूत्राभयकरश्चित्रवर्णः शिवे रतः । सकुंकुमागरुगंधकुसुमं चित्रवर्णकं ॥
" नैवेद्यं माषकान्नाज्यं चित्रान्नं सघृतं हविः । तदन्नेन बलिं दद्यात्सर्वरोगापनुत्तये ॥
" स्वात्यृक्षे चोत्थितो व्याधिः सर्वदा निधनप्रदः । एकद्वित्रिचतुःपंचमासैर्वापि विमुंचति ॥
" स नः पितेति मंत्रस्य गायत्रीमरुदंगिराः । खड्गचर्मधरः कृष्णो गंधः कृष्णागरूद्भवः ॥
२५ " पुष्पं दमनकं धूपः चंदनागुरुगुग्गुलुः । नैवेद्यं पायसं साज्यं हविस्तेन बलिं हरेत् ॥
" द्विदैवभे भवेद्व्याधिर्मासेनैकेन मुंचति । इंद्राग्नी आगतमिति गायत्री वाऽस्य चैव हि ॥
" मधुछंदऋषींद्राग्नी तयोर्ध्यानं च पूर्ववत् । श्रीखंडं कुंकुमं गंधं तयोः पुष्पं सरोरुहं ॥
" देवदारुस्तयोर्धूपो नैवेद्यं घृतपायसं । तदेवान्नं हविस्तत्र चित्रान्नेन बलिं हरेत् ॥
" मित्रभे चोत्थितो व्याधिर्दशरात्रेण मुंचति । मित्रस्य चर्षणीरिति गायत्री चास्य चैव हि ॥
३० " ऋषिर्हिरण्यस्तूपाख्यस्तत्र मित्रोऽधिदेवता । द्विभुजः पद्मगर्भाभः पद्मभृत्पद्मसंस्थितः ॥
" कुंकुमं पुंडरीकाख्यं पुष्पं धूपं च चंदनं । नैवेद्यं पायसं साज्यं हविः कंदं च सूरणं ॥
" बलिस्तत्र प्रदातव्यो मधुशर्करपायसं । घृतपूरकमाषान्नमुद्गगर्भैश्च संयुतं ॥

---

१ ह्र–धूप । २ ह्र–चन्दन, । ३ ह्र–दे । ४ नअंक्ष–दैवते । ५ ह्र–रेति ।

" ज्येष्ठायामुत्थितो व्याधिर्मृत्युरेव न संशयः । अथवा मासमेकं वा मुंचत्येव न संशयः ॥
" इंद्रं च इति मंत्रस्य गायत्रींद्रोंगिरा ऋषिः । इंद्राय पूर्ववद्गंधं चंदनं कुंकुमं शुभं ॥
" कर्पूरधूपो नैवेद्यं चित्रान्नं सुमनोहरं । हविस्तु सूरणं कंदं मधुकंदं सुपायसं ॥
" विचित्रपुष्पगंधेन दध्यन्नेन बलिं हरेत् ॥
" मूलभे चोत्थितो व्याधिर्मासार्द्धेन विमुंचति । खड्गचर्मधरः कृष्णः करालवदनः प्रभुः ॥ ५
" मोषुणोऽस्य च गायत्री घोरः कण्वोऽथ नैर्ऋतिः ॥
" गंधः कृष्णागरुः पुष्पं पद्मं नीलोत्पलं शुभं । धूपः कृष्णागरुर्माषमिश्रान्नमुपहारकं ॥
" तदेवान्नं हविस्तत्र माषान्नेन बलिं हरेत् ॥
" वारिभे चोत्थितो व्याधी रोगिणो निधनप्रदः । विमुंचत्यथवा मासैर्द्वित्रिषड्नवसप्तभिः ॥
" आप्यायस्वेति मंत्रस्य गायत्री पद्मजो जलं । सुवर्णो द्विभुजः पद्मशार्ङ्गधरस्तु चंदनं ॥ १०
" पद्मं शैलेयधूपोऽत्र नैवेद्यं घृतपायसं । हविर्मसूरपिष्टान्नं तदन्नेन बलिं हरेत् ॥
" विश्वभे चोत्थितो व्याधिः सार्द्धमासेन मुंचति । विश्वेदेवास इत्यस्य गायत्र्या विश्वेदेवता ॥
" कमंडलुभयाभोजवरदश्च कुशासनः । चंदनं कमलं पुष्पं धूपं च घृतगुग्गुलुः ॥
" नैवेद्यं पायसाज्यान्नं हविरप्येतदेव हि । समिद्भिर्निचुलैः सार्द्धं तदन्नेन बलिं हरेत् ॥
" श्रवणे चोत्थितो व्याधिर्द्विशरात्रेण मुंचति । अतो देवेति मंत्रस्य गायत्री पद्मजो हरिः ॥ १५
" पीतांबरः कृष्णवर्णः शंखचक्रगदांबुजः । चंदनं मालतीपुष्पं धूपः कर्पूरगुग्गुलुः ॥
" शाल्यन्नं षड्रसोपेतं भक्ष्यभोज्यादिभिः सह । नैवेद्यं हविरप्येतत्पायसेन बलिं हरेत् ॥
" वसुभे चोत्थितो व्याधिर्दशरात्रेण मुंचति । त्रायतामिति मंत्रस्यानुष्टुब् व्यासो वसुस्ततः ॥
" चापबाणधरः शुक्लगंधकर्पूरचंदनं । वारिजं गुग्गुलुर्धूपो नैवेद्यं घृतपायसं ॥
" हविश्चोदुंबरसमिद्गुडपायससंयुतं । लड्डुकाधूपमाज्यतिलपिष्टबलिं हरेत् ॥ २०
" वारुणे चोत्थितो व्याधिरष्टरात्रेण मुंचति । इमं मे वरुण इत्यस्य गायत्री कण्वऋषिः ॥
" नागपाशधरः श्रीमान् वररत्नविभूषितः । मकरस्थो गुरुर्गंधः पुष्पं च कमलोत्पलं ॥
" कर्पूरं चंदनं धूपो नैवेद्यं घृतपोलिका । हविरश्वत्थसमिधश्चित्रान्नेन बलिं हरेत् ॥
" अजपाद्भे भवेद्व्याधिः सर्वदा निधनप्रदः । अथवा बहुभिर्मासैर्दिवसैर्वा विमुंचति ॥
" वामपादकरं भूम्यामाकाशे त्वपरद्वयं । प्रसार्य प्रांजलिः साक्षाद्दीश्वरं चिंतयेत्स्थितः ॥ २५
" शमग्निरित्यस्याजपाद्गायत्री चतुराननः । कुंकुमं चंदनं गंधं पुष्पं श्वेतार्कसंभवं ॥
" धूपः शतौषधीमिश्रो नैवेद्यं दधिपायसं । हविः कुष्मांडगंधः स्याद्दध्यन्नेन बलिं हरेत् ॥
" अहिर्बुध्न्ये भवेद्व्याधिः सार्द्धमासेन मुंचति । नमस्ते रुद्र इत्यस्य सर्वं तत्रैव संस्थितं ॥
" गंधचंदनकर्पूरैः पुष्पं पद्मोत्पलं शुभं । सबिल्वगुग्गुलुर्धूपो नैवेद्यं घृतपायसं ॥
" मुद्गमाषतिलाज्ययवव्रीहिमयं हविः । पूषा च देवताभोजवर्णो भोजधरं शुभं ॥ ३०
" रक्तचंदनगंधोऽत्र पुष्पं मंदारसंज्ञकं । धूपस्तु गुग्गुलुः साज्यो नैवेद्यं घृतपायसं ॥

१ इ–च ।

" हविस्तद्देव सजल दध्यन्नेन बलिं हरेत् ॥

" भूतेशानुगतो यस्माद्रोगनाथ महाज्वर । रोगादस्माच्च मा त्राहि त्वं गृहीत्वोत्तम बलिं ॥ "

जन्मस्थिषु नक्षत्रराशिलग्नेषु यमघटेषु प्रहारैर्वैधनतारकेऽष्टमचन्द्रे रोगे त्पत्तौ मृत्यु रविमघाद्वादशीसोमविशाखैकादशीना भौमार्द्रापंचमीना बुधोत्तराषाढातृतीयानां गुरुशतभिषक्-
५ षष्ठीना शुक्राश्विन्यष्टमीना शनिपूर्वाषाढानवमीना च योगे मृत्यु । भरण्यनुराधा वा चन्द्रे आर्द्रोत्तराषाढा वा सोमे मघाशतभिषग्वा भौमे अश्विनीविशाखात्रुधे ज्येष्ठामृगशिरो वा गुरौ श्रवणआश्लषा वा भृगौ पूर्वाभाद्रपदाहस्तौ चेन्मृत्युयोग । अतोऽत्रोक्तास्तिथिवारनक्षत्रशातयो विस्तृता कार्या ॥

## अथ तिथिवारर्क्षेषु साधारणः प्रयोगः

१० मासपक्षाद्युल्लिख्य ममोत्पन्नस्य व्याधेर्जीवच्छरीराविरोधेन समूलनाशार्थममुकनक्षत्रा मुकदेवतास्य जप करिष्ये इति सकल्प्याष्टशताष्टसहस्रायुतान्यतमसख्यया तत्तद्देवतामन्त्रस्य जप कृत्वाऽन्येन कारयित्वा वा मासपक्षाद्युल्लिख्य ममोत्पन्नव्याधेर्जीवच्छरीराविरोधेन समूल-निवृत्तयेऽमुकशांति करिष्ये इति सकल्प्य गणेशपूजाचार्यवरणात कृत्वाऽऽचार्य पूजयेत् । तत आचार्यो भूमौ तडुलैश्चतुरस्र मडल कृत्वा तत्र हेमीं तत्तन्नक्षत्रदेवता वस्त्रद्वयपरिवृता वक्ष्यमाण-
१५ तत्तन्मंत्रधूपादिभि पूजयेत् । तदीशान्या धान्ये कुभ सस्थाप्य जलेनापूर्य गधसर्वौषधिदूर्वापल्लव पचत्वक्सप्तमृत्फल पचरत्नपचगव्यहिरण्यानि तत्तन्मन्त्रे क्षिप्त्वा वस्त्रद्वयेनावेष्ट्य सर्वे समुद्रा इति तत्र तीर्थान्यावाह्य ' तत्वायामीति ' तत्र वरुणमावाह्य सपूज्याग्नि मुखान्त प्रतिष्ठाप्याज्यभागात तत्तन्नक्षत्रदेवतामन्त्रेण तत्तद्द्रव्येण चाष्टोत्तरसहस्राष्टोत्तरशताष्टाविंशत्यन्यतरसख्यया होम कृत्वा शांतिकलशेन यजमानाभिषेके विहिते ता प्रतिमां रोगी ब्राह्मणाय दद्यात् उक्तद्रव्याभावे चन्दन पुष्पा-
२० भावे शतपत्र धूपाभावे गुग्गुलु । नैवद्याभावे घृतौदन । होमद्रव्याभावे तिला । मन्त्राविज्ञाने गायत्री । अष्टोत्तरसहस्र मृत्युनिर्देशे । अष्टोत्तरशतमन्यत्रेशा जुहुयात् । तत कुशोदकैर्वरुणसूक्तै पुराणमन्त्रैश्चाभिषेक कुर्यात् । पूर्णाहुति वसोर्द्धारां च कृत्वा शांतिपाठ कृत्वा आशिष दद्यात् । अत सर्वशांतिर्भवति । तत आचार्याय सुवर्णप्रतिमा वस्त्रयुग्मेन वेष्टिता सवत्सा गा सालकारां दद्यात् । इतरेभ्योऽपि दक्षिणा दद्याद्ब्राह्मणाश्च भोजयेत् । इति रोगोत्पत्तिशांतिप्रयोग ॥

२५ मदनरत्ने अत्रिस्तु–सर्वनक्षत्रशांतिषु गायत्र्या यमोद्देशेन होमोऽष्टोत्तरशतसख्य । बलिश्च तत्तन्नक्षत्रदेवताभ्यो । सोऽपि होमावशिष्टद्रव्येण क्वचिदन्येन । तच्च तत्र तत्र वक्ष्यते । अत्र रोहिणीपुष्यआश्लेषापूर्वाहस्तस्वातीविशाखानुराधाज्येष्ठामूलोत्तराषाढापूर्वाभाद्रपदोत्तराभाद्रपदासु घृतमेव होमद्रव्य । अनुराधासु बलिरपि तेनै- अन्यत्र तु होमे बलौ च विशेषस्तत्र तत्र वक्ष्यते । द्रव्ये तु विशेषोऽश्विन्यादिक्रमेण द्रष्टव्य क्षीरवृक्षसमिधा होमे दध्योदन बलौ मध्वक्त-
३० तिला । घृत दध्योदन च क्षीरान्न बलौ मुद्गतिला घृतमधुघृताक्ता अक्षता । होमे गध शाल्योदन बलौ गधमाल्योदन बलौ मिष्टान्न बलौ घृताक्ता अक्षतातिला होमे अक्षतातिला बलौ गधपुष्पाणि बलौ बिल्वमाषा गधपुष्प बलौ जलयुत होमे सघृता मुद्गा बलौ गधपुष्पाणि बलौ

---

तु–अन्यत्र ।

दुग्धाक्तान्नगंधमाल्यानि बलौ गधमाल्य बलौ पायस बलौ शाल्यो होमे । पायस बलौ होमे पायस बलौ बीजाक्षता होमे गधपुष्पाणि बलौ अश्वत्थसमिधो होमे । घृताक्तमुद्गा बलौ जलपुष्पाणि होमे । पायस बलौ गधमाल्योदन बलौ २ गधपुष्पाणि बलौ घृताकामलका होमे । गधपुष्पाणि बलौ । अथ च नक्षत्रेषु ज्वराद्युत्पत्तविद्यानिष्टकाल । तत्राश्विन्यादिषु पचविंशति एकविंशति एकविंशति २१ नव ९ नव ९ दश १० मृत्यु १ विंशति १० एकविंशति २१ ५ एकविंशति २१ विकल्पतो मासाश्चौ सप्तविंशति २७ सप्त ७ अष्टौ ८ दश १० अष्टौ ८ अष्टाविंशति २८ एकविंशति विंशति २० विंशति पचविंशति २५ विकल्पन पक्षत्रयोदशदिनमासा द्वादश २१ दश १० दश १० अष्टाविंशति २८ दिनानि क्रमात्पीडा । अते सुख । आश्लषामघापूर्वापूर्वाभाद्रपदासु पक्ष मृत्युरपि समाम्यते ॥

## अथ ग्रहणशांतिः ।

मत्स्यपुराणे १०

" होराया ग्रस्यते यस्य नक्षत्र वा निश कर प्राणसद्दृमामाति स वा मरणमृच्छति ॥
" यस्यान जन्मनक्षत्रे ग्रस्यते शशिभास्करौ । तज्जनाना भवेत्पीडा ये जना शातिवर्जिता ॥
" यस्य राशि समासाद्य भवेद्ग्रहणसभव । तस्य स्नान प्रवक्ष्यामि मत्रौषधिसमन्वित ॥
" चद्रोपरागे सप्राप्ते कृत्वा ब्राह्मणवाचन । सपूज्य चतुरो विप्रान् शुक्लमाल्यानुलपनै ॥
" पूर्वमवोपरागस्य समानीयौषधादिक । स्थापयेच्चतुर. कुभानग्रत सागरानिव ॥ १५
" गजाश्वरथ्यावल्मीकसगमाद्ध्रदगोकुलात् । राजद्वारप्रदेशाच्च मृदमानीय निक्षिपेत् ॥
" पचगव्य पचरत्न पचत्वक पचपल्लव । रोचक पद्मक शख कुकुम रक्तचदन ॥
" शुद्धस्फटिकतीर्थाम्बुसितसर्षपगोकुलान् । मधुक देवदारु च विष्णुक्राता शतावरीं ॥
" बला च सहदेवीं च निशाद्वितयमेव च । एतत्सर्व विनिक्षिप्य कुमेष्वावाहयेत्सुरान् ॥
" सर्वे समुद्रा सरितस्तीर्थानि जलदा नदा । आयातु यजमानस्य दुरितक्षयकारका ॥ २०
" योऽसौ वज्रधरो देव आदित्याना प्रभुर्मत । सहस्रनयनश्चेंद्रो ग्रहपीडा व्यपोहतु ॥
" मुख च सर्वदेवाना सप्तार्चिरमृतद्युति । चद्रोपरागसभूता ग्रहपीडा व्यपोहतु ॥
" य कर्मसाक्षी लोकाना धर्मो महिषवाहन । यमश्चद्रोपरागोत्थां ग्रह० ॥
" रक्षोगणाधिप साक्षी नीलांजनसमप्रभ । खड्गहस्तोऽतिभीमश्च ग्रह० ॥
" नागपाशधरो देव सदा मकरवाहन । चद्रोपरागकलुष वरुणो म व्यपोहतु ॥ २५
" प्राणरूपो हि लोकाना सदा कृष्णमृगप्रिय । वायुश्चद्रोपरागोत्था ग्रह० ॥
" योसौ निधिपतिर्देव खड्गशूलगदाधर । चद्रोपरागदुरित धनदो मे व्यपोहतु ॥
" योसाविंदुधरो देव पिनाकी वृषवाहन । चद्रोपरागपापानि निवारयतु शकर ॥
" त्रैलोक्ये यानि भूतानि स्थावराणि चराणि च । ब्रह्मविष्ण्वर्करुद्राश्च दहतु मम पातक ॥
" एवमावाह्य कुमान्मत्रैरेभिश्च वारुणे । एतानव तथा मत्रान्स्वर्णपट्ट विलखयेत् ॥ ३०
" ताम्रपट्टेऽथ वाऽलर्य न्यवस्त्र तथैव च । मस्तके यजमानस्य निदध्युस्त द्विजोत्तमाः ॥

" कलशान् द्रव्यसंयुक्तान्नानारूपसमन्वितान्। गृहीत्वा स्थापयेद्विद्वान् मद्रपीठोपरि स्थितं॥
" पूर्वोक्तैरेव मंत्रैश्च यजमानं द्विजोत्तमाः। अभिषेकं ततः कुर्युर्मंत्रैर्वरुणसूक्तकैः॥
" ततः शुक्लांबरधरः शुक्लमाल्यानुलेपनः। आचार्यं वरयेत्पश्चात्तत्रर्णपट्टं निवेशयेत्॥
" आचार्यदक्षिणां दद्याद्गोदानं च स्वशक्तितः। गंधमाल्यैर्धूपदीपैः पूजयेद्देवतुष्टये॥
५ " होमं चैव प्रकुर्वीत तिलैर्व्याहृतिभिस्तथा। निवृत्ते ग्रहणे सर्वं ब्राह्मणेभ्यो विशेषतः॥
" दानं च शक्तितो दद्याद्दीच्छेदात्मनो हितं। सूर्यग्रहे सूर्यनामयुक्तान्मंत्रांश्च कीर्तयेत्॥
चंद्रपदस्थाने सर्वत्र सूर्यपदमूहनीयमित्यर्थः।

" अनेन विधिना यस्तु ग्रहणे स्नानमाचरेत्। न तस्य ग्रहणे दोषः कदाचिदपि जायते॥

इति ग्रहणशान्तिः॥

## अथ जलाशयवैकृतशांतिः

१० गर्गः

" नगरादुपसर्पते समीप उपयाति च। नद्यो ह्रदप्रस्रवणा विरसा वै भवंति च॥
" विवर्णं कलुषं तप्तं फेनवज्जंतुसंकुलं। क्षीरं स्नेहं सुरां रक्तं वहंते व्याकुलोदकं॥
" षण्मासाभ्यंतरे तत्र परचक्रभयं विदुः। जलाशया नदंते च प्रज्वलंति क्वथंति च॥
" विमुंचंति तथा ग्रहान् ज्वाला धूमं रजांसि च। अखाते वा जलोत्पत्तिः ससत्वा वा जलाशयाः॥
१५ " संगीतिशब्दा दृश्यंते जनमारभयं विदुः। दिव्यं महाभयं विद्धि मधुमात्रप्रसेचनं॥
" जप्तव्या वारुणा मंत्रास्तैश्च होमो जले भवेत्॥
" मध्वाज्ययुक्तं परमान्नमत्र देयं द्विजानामथ भोजनार्थं॥
" गावश्च देयाः सितवस्त्रयुक्तास्तथोदकुंभाः सकलाश्च शांत्यै।" इति जलाशयवैकृतिशांतिः॥

## अथ वृष्टिवैकृतशांतिः

२० गर्गः

" अतिवृष्टिरनावृष्टिर्दुर्भिक्षादौ भयं मतं। अनृतौ तु दिवानंता वृष्टिर्व्याधिभयाय तु॥
" अनभ्रवैकृता मेघमंतरे गर्जितादयः। शीतोष्णानां विपर्यासे ऋतूनां रिपुजं भय॥
" शोणितं वर्षते यत्र तत्र शस्त्रभयं भवेत्। अंगारपांशुवर्षेण नगरं तद्विनश्यति॥
" मज्जास्थिस्नेहमांसानां जनमारभयं भवेत्। फलं पुष्पं तथा धान्यं परेणातिभयाय तु॥
२५ " पांशुजं तुषलानां च वर्षतो रोमजं भयं। छिद्रावांतैर्प्रवर्षेण सस्यानामीति वर्द्धनं॥
" विरजस्के रवौ व्यभ्रे यदा छाया न दृश्यते। दृश्यते तु प्रतीपा वा तत्र देशे भयं भवेत्॥
प्रतीपा प्रतिकूला छाया। विपरीतछायेत्यर्थः॥
" निरभ्रे च तथा रात्रौ श्वेतं याम्योत्तरेण तु। इंद्रायुधे तथा दृष्ट्वा उल्कापातं तथैव च॥
" दिग्दाहपरिघोषौ च गंधर्वनगरं तथा। परचक्रभयं विंद्याद्देशोपद्रवमेव च॥
३० " सूर्येंदुपर्जन्यसमीरणानां यागस्तु कार्यो विधिवद्द्विजेंद्र।
" धान्यानि गोकांचनदक्षिणाश्च देया द्विजानामघनाशहेतोः" ॥ इति वृष्टिवैकृतशांतिः॥

---

१ ह-श्र। २ क्षभ—सस्यानीति खर्के—सस्यामीतितवर्धन।

## अथाग्निवैकृतशांतिः

गर्गः

" अग्निः प्रदीप्यते यत्र राष्ट्रे भृशमनिंधनः । न दीप्यते वेंधनवांस्तद्राष्ट्रं पीडयेन्नृप ॥
" ज्वलेदार्द्रश्च वंशो वा तथार्द्रो वा भुवः सुधा । प्रासादतोरणं द्वारं नृपवेश्म सुरालयं ॥
" एतानि यत्र दह्यंते तत्र राजभयं वदेत् । विद्युता वा प्रदह्यंते तत्रापि नृपतेर्भयं ॥ ५
" अनैशानि तमांसि स्युर्विना पांशुरजांसि च । धूमश्चानग्निजो यत्र तत्र विद्यान्महाभयं ॥
" तडिद्विनाभ्रं गगने भयं स्याद्वृष्टिवर्जिते । दिवा सतारे गगने तथैव भयमादिशेत् ॥
" ग्रहनक्षत्रवैकृत्ये तारावैकृतिदर्शने । पुरवाहनदारेषु चतुष्पदद्विपेषु च ॥
" स्वभावाद्वापि हीयेत धेनुवत्सादिकं च यत् । लोहायुधविकारः स्यात्तत्र संग्राममादिशेत् ॥
" त्रिरात्रोपोषितस्तत्र पुरोधाः सुसमाहितः । समिद्भिरर्कवृक्षाणां सर्षपैश्च घृतेन च ॥ १०
" होमं कुर्यादग्निमंत्रैर्ब्राह्मणांश्चैव भोजयेत् ॥
" दद्यात्सुवर्णं च तथा द्विजेभ्यो गाश्चैव वस्त्राणि तथा भुवं च ।
" एवं कृते तत्समुपैति नाशं यदग्निवैकृत्यभयं द्विजेंद्र ॥ " इत्यग्निवैकृत्यशांतिः ॥

## अथ प्रतिमादिवैकृत्यशांतिः

गर्गः १५

" देवतायाः प्रनृत्यंति वेपंते प्रज्वलंति वा । आरटंति च रोदंति प्रस्विद्यंति हसंति च ॥
" उत्तिष्ठंति निषीदंति प्रधावंति रमंति च । मज्जंति विकृतिं भूयः मानुषाणां भयावहाः ॥
" अवाङ्मुखावतिष्ठंति स्थानात्स्थानं भ्रमंति च । वमंत्यग्निं तथा धूमं स्नेहरक्ते तथा वसां ॥
" एवमादीनि दृश्यंते विकाराः सहजोत्थिताः । लिंगायतनचित्रेषु तत्र वासं न रोचयेत् ॥
" राज्ञो वा व्यसनं तत्र स च देशो विनश्यति । देवयात्रासु चोत्पातान् दृष्ट्वा देशभयं वदेत् ॥ २०
देवयात्रोत्पाता वराहसंहितोक्ता ज्ञेयाः
" विना साहसधर्मेण तत्र वासं न रोचयेत् । पशूनां रुद्रजं ज्ञेयं नृपाणां लोकपालजं ॥
रुद्रजं रुद्रप्रतिमासूत्पन्नं । वैकृतं पशुभयदमित्यर्थः । एवं सर्वत्रापि ज्ञातव्यं ।
" ज्ञेयं सेनापतीनां च यत्स्यात्स्कंदविशाखजं । लोकानां विष्णुवस्विंद्रविश्वकर्मसमुद्भवं ॥
" विनायकोद्भवं ज्ञेयं गणानां सेवकाय च । देववृते च याः प्रेष्याः देवस्त्रीषु नृपस्त्रियः॥ २५
" वासुदेवेषु विज्ञेयं गृहाणमेव नान्यथा ॥
" देवतानां विकारेषु श्रुतिवेत्ता पुरोहितः । देवतार्चां तु गत्वा वै स्नातामाच्छाद्य भूषयेत् ॥
" पूजयेत्तां महाभाग गंधमाल्यान्नसंपदा । मधुपर्केण विधिवदुपतिष्ठेदनंतरं ॥
" तल्लिंगेण च मंत्रेण स्थालीपाकं यथाविधि । पुरोधा जुहुयाद्वह्नौ सप्तरात्रमतंद्रितः ॥
" विप्रांश्च पूज्या मधुरान्नपानैः सदक्षिणैः सप्तदिनं नरेंद्र । ३०
" प्राप्तेऽष्टमेऽन्हि क्षितिगोप्रदानैः सकांचनैः शांतिमुपैति पापं ॥"

इत्यद्भुतशांतिषु देवताप्रतिमावैकृत्यशांतिः ॥

---

१ इयदक्ष—भवेत् । २ ह-विध ।

## अथाकस्मिकप्रासादपतनादिशांतिः

गर्गः

" प्रासादतोरणाट्टालद्वारप्राकारवेश्मनां । अनिमित्तं तु पतनं दृढानां राजमृत्यवे ॥
" रजसा वाऽथ धूमेन दिशो यत्र समाकुलाः । आदित्यश्चंद्रताराश्च विवर्णा भयवृद्धये ॥
५ " राक्षसा यत्र दृश्यंते ब्राह्मणाश्च विधर्मिणः । ऋतवश्च विपर्यस्ता अपूज्यं पूजयेज्जनः ॥
" नक्षत्राणि वियोगीनि तन्महद्भयलक्षणं । केतूदयोपरागौ च छिद्रं वा शशिसूर्ययोः ॥
" ग्रहर्क्षविकृतिर्यत्र तत्रापि भयमादिशेत् । स्त्रियश्च कलहायंते बाला निघ्नंति बालकान् ॥
" क्रियाणामुचितानां च विछित्तिर्यत्र दृश्यते । अग्निर्यत्र न दृश्येत हूयमानोऽथ शाम्यति ॥
" क्रव्यादा वायसा वाहा यांति चोत्तरतस्तथा । पूर्णकुंभाः स्रवंते च वन्हयो वा निलुंपते ॥
१० " मंगल्यध्वनयो यत्र न श्रूयंते समंततः । क्षवथुर्बाधते वाऽप प्रोत्साहे सति निंदितोः ॥
" न दैवतेषु वर्तते यथा व्रतग्रहणेषु च । मंद्घोषाणि वाद्यानि वाद्यंते विस्वराणि च ॥
" गुरुमित्राद्विषो यत्र शत्रुपूपरताः सदा । ब्राह्मणान् सुहृदोऽमात्यान् जनो यत्रावमन्यते ॥
" शांतिमंगलहोमेषु नास्तिक्यं यत्र मन्यते । राजा वा म्रियते तत्राथ वा देशो विनश्यति ॥
" राज्ञो विनाशे संप्राप्ते निमित्तानि निबोध मे । ब्राह्मणान् प्रथमं द्वेष्टि ब्राह्मणांश्च विनिंदति ॥
१५ " ब्राह्मणस्वानि चादत्ते ब्राह्मणांश्च जिघांसति । नैतान्स्मरति कृत्येषु योऽन्वितश्चाभ्यसूयति
" रमते निंदया चैषां प्रशंसां नाभिनंदति । अपूर्वं तु करं लोभात्तथा पातयते जने ॥
" एतेष्वभ्यर्चयेत्सम्यक् सपत्नीकान् द्विजोत्तमान् । भोज्यानि चैव कर्तव्या सुराणां बलयस्तथा ॥
" गावश्च देया द्विजपुंगवेभ्यो भुवं तथा कांचनमंबराणि ।
" होमं च कुर्याद्द्विजपूजनं च एवं कृते शांतिमुपैति पापं ॥
२० " अद्भुते तु समुत्पन्ने यदि वृष्टिः प्रजायते । सप्ताहाभ्यंतरे ज्ञेयमद्भुतं विफलं हि तत् ॥ "

इत्याकस्मिकप्रासादपतनादिशांतिः ।

## अथ वृक्षविकारशांतिः

गर्गः

" रुदतो व्याधिरभ्येति हसतो देशविभ्रमः । शाखाप्रपतने कुर्यात्संग्रामं योधपातनं ॥
२५ " बालानां मरणं कुर्याद्बालानां फलपुष्पतः । स्वराष्ट्रभेदं कुरुते फलपुष्पमनार्तवं ॥
" क्षीरं सर्वत्र गंभीरस्नेहं दुर्भिक्षलक्षणं । वाहनापचयं मद्ये रक्ते संग्राममादिशेत् ॥
" मधुस्रावे भवेद्व्याधिर्जलस्रावे च वर्षति । आरोगशोषणं ज्ञेयं ब्रह्मन् दुर्भिक्षलक्षणं ॥
" शुष्केषु संप्ररोहत्सु वीर्यमंतं च हीयते । उत्थाने पतितानां च भयं भेदकरं भवेत् ॥
" स्थानात्स्थाने तु गमन देशभंगं तथा दिशेत् । अन्येषु चैव वृक्षेषु वृक्षोत्पातेष्वतंद्रितः ॥
३० " आच्छादयित्वा तं वृक्षं गंधमाल्यैर्विभूषयेत् । वृक्षोपरि तथा छत्रं कुर्यात्पापप्रशांतये ॥
" शिवमभ्यर्चयेद्देवं पशुं चास्मै निवेदयेत् । मूलेभ्य इति वृक्षेषु हुत्वा रुद्रं जपेत्ततः ॥
" मध्वाज्ययुक्तेन तु पायसेन संपूज्य विप्रांश्च भुवं च दद्यात् ।
" गीतेन नृत्येन तथार्चयत्तं देवं हरं पापविनाशहेतोः "॥ इति वृक्षोत्पातशांतिः ॥

---

अक्ष-देवं ।

## अथोत्पातशांतिः

नारदसंहितायां चतुस्त्रिंशेऽध्याये

"उत्पाता विविधा लोके दिव्यभौमांतरिक्षगाः । तेषां नामानि शांतिं च सम्यक् वक्ष्ये पृथक् पृथक्॥
" देवतायाः प्रनृ यंति पतंति प्रज्वलंति वा । मुहुर्गायंति रोदंति प्रस्विद्यंति हसंति च ॥
" वमंत्यग्निं तथा धूमं स्नेहं रक्तं पयोजलं । अधोमुखं तु तिष्ठंति स्थानात्स्थानं व्रजंति वा ॥ ५
" एवमाद्याश्च दृश्यंते विकाराः प्रतिमादिषु । गंधर्वनगरं चैव द्विवानक्षत्रदर्शनं ॥
" महोल्कापतनं काष्ठं तृणा रक्तप्रवर्षणं । गांधर्वगेहं दिग्दाहं भूमिकंपं दिवानिशि ॥
" अनग्नौ च स्फुलिंगाः स्युर्ज्वलनं च विनेंधनं । निशींद्रचापं मंडूकशिखरं श्वेतवायसं ॥
" दृश्यंते विस्फुलिंगा ये गोगजाश्वोष्ट्रगास्ततः । जंतवो द्वित्रिशिरसो जायंते वा वियोनिषु ॥
" प्रतिसूर्याश्च तिसृषु स्युर्दिक्षु युगपद्रवेः । जंबूको ग्रामसंवेशः केतूनां च प्रदर्शनं ॥ १०
" काकानामाकुलं रात्रौ कपोतानां दिवा यदि ॥
" एवमेते महोत्पाता बहवः स्थाननाशकाः । केचिन्मृत्युप्रदाः केचिच्छत्रुभ्यश्च भयप्रदाः ॥
" देवालये स्वगेहे वा ऐशान्यां पूर्वतोऽपि वा । कुंडं लक्षणसंयुक्तं कल्पयेन्मेखलायुतं ॥
" गृह्योक्तविधिना तत्र स्थापयेच्च हुताशनं । जुहुयादाज्यभागांतमथवाष्टोत्तरं शतं ॥
" यत इंद्र भयामहे स्वस्ति येन च मंत्रकैः । समिदाज्यचरुव्रीहितिलैर्व्याहृतिभिस्ततः ॥ १५
" कोटिहोमं तदर्द्धं वा लक्षहोममथायुतं । यथावित्तानुसारेण पादहोममथापि वा ॥
" एकविंशतिरात्रं वा पक्षं पक्षार्द्धमेव वा । त्रिरात्रमेकरात्रं वा होमकर्म समाचरेत् ॥
" गणेशक्षेत्रपालार्कदुर्गाख्या अंगदेवताः । तासां प्रीत्यै जपः कार्यः शेषं पूर्ववदाचरेत् ॥
" ऋत्विग्भ्यो दक्षिणां दद्यात्षोडशेभ्यः स्वशक्तितः ॥ "

इति उत्पातशांतिः ॥ २०

## अथ पल्लीसरटशांतिः

गर्गः

" पल्याः प्रपातस्य फलं सरटस्य तथैव च । शीर्षे राज्यं श्रियः प्राप्तिर्भाले चैश्वर्यवर्द्धनं ॥
" कर्णयोर्भूषणावाप्तिर्नेत्रयोर्बंधुदर्शनं । नासिकाया तु सौभाग्यं वक्त्रे मिष्टान्नभोजनं ॥
" कंठे नित्यं प्रियाश्लेषः स्कंधयोर्विजयो ध्रुवं । धनलाभो बाहुयुग्मे करयोरर्थसंक्षयः ॥ २५
" चरणयोश्च निरुद्योगः पादयोर्भ्रमणं भवेत् । एवं पल्याः प्रपातस्य फलं ज्ञेयं विचक्षणैः ॥
" एतदेव फलं विद्याच्छरटस्य प्ररोहणे ।
" पल्याः प्रपतने चैव सरटस्य प्रपातने । पंचरात्रं भवेत्तस्य व्याधिपीडा विशेषतः ॥
" पतनानंतरं तस्य रोहणं यदि जायते । पतने फलमुत्कृष्टं रोहणेऽल्पफलं भवेत् ॥
" आरोहणं चोर्ध्ववक्त्रे अधोवक्त्रे निपातनं । भवेद्यदि सुशीघ्रेण तत्फलं जायते ध्रुवम् ॥ ३०
" मृत्युयोगे दग्धयोगे पाते च यमघंटके ॥
" चंद्राष्टमे नैधने च जन्मर्क्षे विषनाडिके । क्रूरलग्ने क्रूरयुते क्रूरेण च निरीक्षिते ॥

---

१ ह्य-रे । २ ह्य-चा । ३ ह्य-नानो । ४ ह्य-हृदयगे । ५ ह्यन-दिने; ह्य-दाहयोगे।

" अष्टमे ते कूरयुते विष्टिवैधृतिसंयुते। दुर्निमित्ते तयोः पाते निधनं जायते ध्रुवं॥
" तयोः स्पर्शनमात्रेण सचैलं स्नानमाचरेत्। गव्यं पंचविधं प्राश्य कुर्यादाज्यावलोकनं॥
" शस्ते वाऽप्यथ वाऽशस्ते यदीच्छेदात्मनः शुभं। पुण्याहं वाचयित्वा तु शांतिकर्म ततश्चरेत्॥
" प्रतिरूपं तयोः कुर्यात्सुवर्णेन स्वशक्तितः। रक्तवस्त्रेण संवेष्ट्य गंधपुष्पैः प्रपूजयेत्॥
५ " कलशे वस्त्रयुग्मेन पूजयेद्विधिना ततः। अग्निसंस्थापनं कृत्वा होमं कुर्याद्विधानतः॥
" मृत्युंजयेन मंत्रेण समिद्भिः खादिरैः शुभैः। तिलैर्व्याहृतिहोमं च अष्टोत्तरसहस्रकं॥
" महाव्याहृतिहोमं च सर्पिःक्षीरेण कारयेत्। अभिषेकं ततः कुर्याद्यजमानस्य मूर्द्धनि॥
" पुण्यैर्वारुणसूक्तैश्च घोषैः शांतादिमंत्रकैः॥
" इत्थं मंत्रविधानेन यः कुर्याच्छांतिमुत्तमां। तस्यायुर्विजयो लक्ष्मीः कीर्तिः पुष्टिश्च जायते॥"

१० इति पल्ल्यादिपतनशांतिः॥

## अथ ग्राम्यारण्यादिशांतिः

गर्गः

" प्रविशंति यदा ग्राममारण्या मृगपक्षिणः। अरण्यं यांति वा ग्राम्याः स्थलं यांति जलोद्भवाः॥
" स्थलजा वा जलं यांति घोरं वा संति निर्भयाः। राजद्वारे पुरद्वारे शिवाश्चाप्यशिवप्रदाः॥
१५ " दिवा रात्रिचरा वापि रात्रौ वापि दिवाचराः। ग्राम्यास्त्यजंति ग्रामं वा तच्चोत्पातस्य निर्दिशेत्॥
उत्पातस्य लक्षणमिति शेषः।
" दीप्ता वा संति संध्यासु मंडलानि च कुर्वते। वासंते विस्तरं यत्र तदा प्रेतफलं लभेत्॥
" प्रदोषे कुक्कुटो वासेद्धेमंते वापि कोकिलः॥ अर्कोदयेऽर्काभिमुखस्तदामात्यभयं वदेत्॥
" गृहं कपोतः प्रविशेत्क्रव्यादनुविलीयते। मधु वा मक्षिकाः कुर्यान्मृत्युर्गृहपतेर्भवेत्॥
२० " प्राकारद्वारगेहेषु तोरणापणवीथिषु। केतुच्छत्रायुधाग्रेषु क्रव्यात्संश्रयते यदि॥
" जायते वाऽथ वल्मीको मधु वा दृश्यते यदि। स देशो नाशमायाति राजा च म्रियते तदा॥
" मूषिकाः शलभान् दृष्ट्वा प्रभूतं क्षुद्भयं वदेत्। काकोलूककास्थिशृंगाख्या श्वानो मरकवेदिनः॥
" दुर्भिक्षवेदिनो तोयाः काका धान्यक्षये यदि। जनाभिभिमर्वतश्च निर्भया रणवेदिनः॥
" काको मैथुनयुक्तश्चेत् श्वेतः स यदि दृश्यते। राजा च म्रियते तत्र तदा देशो विनश्यति॥
२५ " उलूको वासते यत्र निपतेद्वा गृहे यदि। ज्ञेयो गृहपतेर्मृत्युर्धननाशस्तथैव च॥ वासते शब्दं करोति।
" मृगपक्षिविकारेषु कुर्याद्धोमं सदक्षिणं। देवाः कपोत इति च जप्तव्यं पंचभिर्द्विजैः॥
" सुदेव इति चैकेन देया गावस्तु दक्षिणा। जपेच्छाकुनसूक्तं च नमो वेदशिरांसि च॥
'देवाःकपोत' इत्यादयो मंत्रा ऋग्वेदे प्रसिद्धाः। नमो नमो ब्रह्मणे नम इति। वेदशिरांसि उपनिषदः॥
" गावश्च देया विधिवत् द्विजानां सकांचना वस्त्रयुगोत्तरीयाः।
३० एवं कृते शांतिमुपैति पापं मृगैर्द्विजैर्वापि निवेदितं यत्॥"

इति ग्राम्यारण्यादिशांतिः॥

---

१ नद्य-योः। २ अयक्षज्ञानकइ-क्षय; क्ष-क्षयो; ज्ञ-क्षुपे।

" मृत श्मशान यो नीत पुनर्जीवति मानव । गृहे यस्य प्रविष्टोऽसौ तिष्ठेद्य कदाचन ॥
" अचिराच्छून्यता याति हृतदारपरिग्रह । तत्र शाति प्रवक्ष्यामि धर्मराजमत यथा ॥
" सक्षीराणा घृताक्तानामग्नौ हुत्वा सुख बुध । उदुबरीणा विधिवत्तत शाति कृता भवेत् ॥
" सावित्र्यष्टसहस्रस्य क्षीरशार्ति च कारयेत् । रक्तानामकेत्या द्विवक्ष्यमाणा क्षीरशांति ॥
" कपिल च तथा कास्य हुताते भूरिदक्षिणा । ततस्तच्छाम्यते पाप धर्मराजमत यथा ॥ ५
स एव " अनारोग्यमनावृष्टिर्दुर्भिक्ष जनमारक । ज्वर कासस्तथा श्वास कदूर्दद्रूर्विकाचिका ॥
" शिरोरोगोऽक्षिरोगश्च पाडुरोगो गलग्रह । व्याधयश्च प्रवर्तंते दुर्दृष्टे स्वप्नलक्षणे ॥
" तत्र शार्ति प्रवक्ष्यामि बृहस्पतिमत यथा ॥
" त्रिरात्रोपोषितो भूत्वा हविष्याशी पुरोहित । सक्षीराणा घृताक्ताना समिधाना शतं दहेत् ।
पलाशस्येति शेष । १०
" ततस्तच्छाम्यते पाप बृहस्पतिमत यथा । स एव
" वज्रमिंद्राशनिर्वापि ज्वलन्वापतते यदि । पुरे जनपदे वापि तत्र विद्या महद्भय ॥
" सवत्सरे ततो घोरे विंद्याच्चैव जनक्षय । राजामात्यविनाश च निर्दिशेन्नात्र सशय ॥
" तत्र शार्ति प्रवक्ष्यामि इद्राग्निवचन यथा । अपामार्गस्य समिधा सहस्राष्टोत्तर भवत् ॥
" पायस भोजयेद्विप्रान् क्षारशाति च कारयत् । रक्तानामेकवर्णाना गवा क्षीर समादिशेत् ॥ १५
समादिशद्धोमार्थं सपादयेत् । " हुत्वाहुतिशत विप्रो महेंद्रणेव मत्रवित् "। महेंद्रेण महा इद्रा
य ओजसेत्यादिना ।
" सुवर्णमणिसकाशा हुताते भूरिदक्षिणा । गौरिति शेष ॥ ततस्तच्छाम्यते पापमिंद्राग्निवचन यथा ॥

शौनकः

" अथ यदाऽस्य माणिककुम्भस्थालीदरणमायासो राजकुलविवादो वा यानछत्रशय्यासनावसथ २०
ध्वजगृहैकदेशभजने । गजवाजिपुरुषा प्रमीयते वा हस्तिनो वा माद्यति । इत्येवमादीनि ।
तान्येतानि सर्वाणि इद्रदेवत्या-यद्भुतानि प्रायश्चित्तानि भवति । इद्रो देवता कर्ता हर्ता च येषा
तानींद्रदैवत्यानि अद्भुतानि तेषु प्रायश्चित्ता-यपींद्रदैवत्यानि भवति । इद्र विश्वेति स्थालीपाक
हुत्वा पचभिराज्याहुत र्जुहोति । इद्राय स्वाहा । शचीपतये स्वाहा । ईश्वराय स्वाहा । सर्वपापशमनाय
स्वाहेति व्याहृतिभिश्च पृथक पृथक् । स एव । गृहद्वारेण वा सर्पो गच्छति कपोत प्रविशति २५
शरीरे रोहति कृष्णस्त्रीदर्शनमेवमादीनि ता-येतानि सर्वाणि यमदैवत्यानि अद्भुतानि प्रायश्चित्तानि
भवति । नाके सुपर्णमिति स्थालीपाक हुत्वा पचभिराज्याहुतीर्जुहुयात् । यमाय स्वाहा । प्रेताधि
पतये स्वाहा । दडपाणये स्वाहा । सर्वपापनाशनाय स्वाहेति । व्याहृतिभिश्च पृथक पृथक् जुहोति ।
स एव । दिशो दश दह्यति । केतवश्चोत्तिष्ठति । गवा शृगाद्रुधिर स्रवति । अत्यर्थं हिमाशुस्तपति ।
इत्येवमादीनि सर्वाणि सोमदेवत्या-यद्भुतानि प्रायश्चित्तानि भवति । सोम राजानमिति ३०
स्थालीपाक हुत्वा पचभिराज्याहुतिभिरभिजुहोति । सोमाय स्वाहा । नक्षत्राणां पतये स्वाहा । सीर-
पाणये स्वाहा । ईश्वराय स्वाहा । सर्वपापशमनाय स्वाहा । व्याहृतिमिश्च पृथक् पृथक् जुहोति ।

इत्यद्भुतशातय

१ ह-हरण ।

## अथाश्वशांतिः

गर्गः

" अश्वशांतिं प्रवक्ष्यामि शृणु शौनक यत्नतः। अश्वशालासमीपे तु कुंडं कुर्याद्विधानतः॥
" उत्खातं हस्तमात्रं च आयामं च तथा भवेत्। मेखलात्रयसंयुक्तं योनिरश्वत्थपत्रवत्॥
५ " कुंडस्योत्तरपूर्वे तु वेदिं कुर्यात्सुशोभनां। सार्द्धहस्तं तथायाममुत्सेधं हस्तमात्रकं॥
" वर्तुलां चतुरस्रां च देवानां स्थापनाय च। कुर्यादष्टदलं पद्मं तंडुलैर्वेदिकोपरि॥
" तन्मध्ये पूजयेद्देवं सुवर्णेन प्रकल्पितं। अश्वारूढं महातेजः वज्रहस्तं महाबलं॥
" अश्वारिष्टहरं शूरं देवं तं हयवल्लभं। देवेंद्रं च धराधीशं सुवर्णेन प्रकल्पयेत्॥
" वरुणं च तथेशानं रजतेन प्रकल्पितं। यमं च काललोहेन ताम्रेणापि तथैव च॥
१० " निर्ऋतिं च तथा वायुं नागेनैव प्रकल्पयेत्। सोमं च रजतेनैव कल्पयेत्सुसमाहितः॥
" कुर्यादेवं लोकपालांश्च स्वेषु स्थानेषु विन्यसेत्। आवाहनार्घ्यपाद्यार्घैर्गंधपुष्पादिकैः शुभैः॥
" धूपदीपैश्च नैवेद्यैः पूजयेन्मंत्रपूर्वकं। पंचामृतेन स्नपनं कुर्याद्विष्णुमंत्रकैः।
" त्वमग्ने वाजिनमिति मंत्रेणावाहनं चरेत्।
" अश्वस्तूपरोगमिति कुर्यात्संस्थापनं बुधः। मानस्तोकेति मंत्रेण स्नानं सम्यक् प्रकल्पयेत्॥
१५ " युवं वस्त्राणिति तथा वस्त्रं चैव प्रदापयेत्। यज्ञोपवीतं दातव्यं देवस्य त्वेति मंत्रतः॥
" वित्तदायेति मंत्रेण अर्चयेत्सुसमाहितः। गंधद्वारेति वै गंधं पुष्पं श्रीश्च तथैव च॥
" धूरसीति तथा धूपं दीपं चापि विशेषतः। अन्नपतेति मंत्रेण नैवेद्यं बहु कल्पयेत्॥
" एवं संपूज्य विप्रेंद्र रतिपुत्रं हयाधिपं। ततः संपूजयेद्धीमान् लोकपालान्स्वमंत्रतः॥
" इंद्रं वो विश्वतः शक्रं अग्निं दूतेति पावकं। यमाय सोमेति यमं निर्ऋतिं मोषुणेति च॥
२० " त्वन्नो अग्नेति वरुणं तव वायेति चानिलं। सोमो धेनुं तथा सोमं कद्रुद्रेति तथा शिवं॥
" पूजयेद्गंधपुष्पाद्यैर्धूपदीपनिवेदनैः। क्रमेण पूजयेदित्थं देवान्संपूजयेत्ततः॥
" अश्वारूढ महावीर तुरंगेश महाबल। अश्वारूढं च रेवंतं शक्त्या चाशु विनाशय॥
" आखंडल गजारूढ वज्रहस्त सुरेश्वर। वज्रेण तुरगारिष्टं भिन्नं कुरु शचीपते॥
" मेषारूढ महातेजोज्वलज्ज्वालाविभूषितः। तीक्ष्णासिना हुतवह अश्वारिष्टं विनाशय॥
२५ " कालदंडधरो देव महामहिषवाहन। कालदंडेन दंडोत्थमश्वारिष्टं विनाशय॥
" खड्गहस्त महाभीम निर्ऋते प्रेतवाहन। छिन्नं कुरु हयारिष्टं तीक्ष्णखड्गेन शीघ्रतः॥
" पाशहस्त जलाधीश सदा मकरवाहन। पाशेन च हयारिष्टं भिन्नं कुरु जलाधिप॥
" ध्वजहस्त महाकाय मृगारूढ महाबल। ताडयस्व हयारिष्टं ध्वजदंडेन चानिल॥
" शक्तिहस्त महाराज कुबेर नरवाहन। अश्वारिष्टं च यक्षेश शक्त्या चाशु विनाशय॥
३० " शूलहस्त महारौद्र पिनाकिन् वृषवाहन। नाशयाशु हयारिष्टं त्रिशूलेन त्रिलोचन॥
" एवं संप्रार्थ्य विप्रेंद्र लोकपालक्रमेण च। अग्नेः संस्थापनं कृत्वा कुंडे होमं च कारयेत्॥
" तिलव्रीहियवैश्चैव प्रत्येकं चाष्टकाष्टकं। होमं कुर्याद्दश्वकामश्चरुणा घृतपूर्वकं॥
" स्थापयित्वाऽऽज्यसंस्थालीं सत्स्वेनाज्येन यत्नतः। इत्थं सर्वैश्च मंत्रैश्च देवमुद्दिश्य कारयेत्॥
अग्नये स्वाहा। सोमाय स्वाहा। वायवे स्वाहा। निर्ऋतये स्वाहा। सवज्राय स्वाहा।
३५ सर्वदुरितनाशाय स्वाहा। रेवंताय स्वाहा। सर्वकामफलप्रदाय स्वाहा। प्रजापतये

---

१ ह्य-स। २ ह्य-कामप्रदाय।

## अथ कपोतशांतिः

नारदः

" आरोहयेद्गृहं यस्य कपोतो वा प्रवेशयेत् । स्थानहानिर्भवेत्तस्य यद्वाऽनर्थपरंपरा ॥
" दोषाय धनिनो गेहे दरिद्राणां शिवाय च । तस्य शांतिश्च कर्तव्या जपहोमविधानतः ॥
" ब्राह्मणान्वरयेत्तत्र स्वस्तिवाचनपूर्वकं । षोडश द्वादशाष्टौ वा श्रौतस्मार्तक्रियापरान् ।　५
" देवाः कपोत इत्यादि ऋचाभिः पंचभिर्जपं । लक्षं कृत्वा प्रयत्नेन स्वगृह्योक्तविधानतः ॥
" ऐशान्यां स्थापयेद्वह्निं मुखांतेष्टोत्तरं शतं । मुखांते अग्निमुखांते ॥
" प्रत्येकं समिदाज्यान्नैः प्रतिप्रणवपूर्वकं ॥
" यतः इंद्र भयामहे स्वस्तिदेति[1] निगद्य[2]कैः ॥ त्रिभिर्मंत्रैश्च जुहुयात्तिलान्व्याहृतिभिस्तथा ॥
" जयाहुतीस्ततो हुत्वा कुर्यात्पूर्णाहुतिं स्वयं । विप्रेभ्यो दक्षिणा दद्यात् यो शांतिं च ततो जपेत् ॥　१०
" ब्राह्मणान्भोजयेत्पश्चात्स्वयं भुंजीत बंधुभिः । एवं यः कुरुते सम्यक् तस्माद्दोषात्प्रमुच्यते ॥
" पिंगलायाः स्वरेऽप्येवं मधुवल्मीकयोरपि । संपूर्णे मंदिरे हानिः शून्यसद्मनि मंगलं ॥
" प्राकारे च पुरद्वारे रथ्यात्रिपु च वीथिषु । ग्रामस्य तत्फलं चैव गुरुकल्पनया ततः ॥
" शांतिकर्माखिलं कार्यं पूर्वोक्तेन क्रमेण तु ॥"

इति कपोतादिशांतिः ॥　१५

## अथ काकवैकृत्यशांतिः

गर्गसंहितायां

" काकस्य मैथुनं पश्येत् काकः शिरसि चेद्विशेत् । शिरस्युरसि वा कुर्यात्पक्षघातं नखैस्तथा ॥
" विदारणं च कुरुते शयानं च स्पृशेद्यदि । तदा वदेत्तु मरणं महारिष्टभयादि वा ॥
" मध्यरात्रे यदा काको वाशते हेतुना विना । तद्गृहारिष्टमाचष्टे ग्रामारिष्टभयादि वा ॥　२०
" शांतिं तत्र प्रकुर्वीत विधानेन यथोदितां । उद्दिश्यारिष्टशमनं कुर्यात्संकल्पमादितः ॥
" शुचौ देशे रत्निमात्रं स्थंडिलेऽग्निं निधाय च । तदीशानेऽष्टदले च कुंभादौ स्वशक्तितः ॥
" हिरण्यनिर्मितं विद्वान् लोकपालसमन्वितं । पूजयित्वा स्वशास्त्रोक्तविधिना श्रपयच्चरुं ॥
" कृ वाज्यभागपर्यंतं जुहुयात्क्रमशो हविः । पालाशीः समिधो वीहींश्चरुमाज्यमिति क्रमात् ॥
" अष्टोत्तरसहस्रं वा अष्टोत्तरशतं तु वा । यत इंद्रेति मंत्रेण लोकपालेभ्य एव च ॥　२५
" शक्त्या हुत्वा स्वशास्त्रोक्तप्रायश्चित्ताहुतीर्हुनेत् ॥
" लोकपालबलिं दत्वा इंद्राग्न्योः चरुशेषतः । वायसेभ्यो बलिं दद्यादैंद्रवारुणमंत्रतः ॥
" ऐंद्रवारुणवायव्या याम्या वै नैर्ऋताश्च ये । ते काकाः प्रतिगृह्णंतु भूम्यां पिंडं मयार्पितं ॥
" पूर्णाहुतिं ततो हुत्वा आचार्यं पूज्येत्ततः । कुंभोदकेनाभिषेको यजमानस्य विस्तरात् ॥
" आचार्यायेंद्रप्रतिमां दद्यात्सोपस्करां ततः । शक्त्या च भूयसीं दद्यात् द्विजानां भोजनं दिशेत् ॥　३०
" शतं तदर्द्धमर्द्धं वा शक्त्यभावे दशापि वा । सर्वशांतिं पाठयित्वा गृह्णीयाच्च द्विजाशिषः ॥
" एवं कृते भवेच्छांतिः काकारिष्टविनाशिनी ।"

इति गर्गसंहितायां काकमैथुनदर्शनादिशांतिः ॥

1 ह्य–थ । 2 ऋ. म. ८।८।१३ । 3 ऋ. सं. ६।४।३८ । । 4 ऋ. सं. ८।८।१० । 5 ह्य–वासत ।

## प्रकारांतरेण काकमैथुनदर्शनशांतिः

**नारदः**

" दिवा वा यदि वा रात्रौ यः पश्येत्काकमैथुनं । स नरो मृत्युमाप्नोति ह्यथवा स्थाननाशनं ॥
" काकघातव्रतं चैव विदधीताथ वत्सरं । पितॄन्वंदे द्विजान् भक्त्या प्रत्यहं चाभिवादयेत् ॥
५ " जितेंद्रियो जितक्रोधः सत्यधर्मपरायणः । तद्दोषशमनार्थाय शांतिकर्म समारभेत् ॥
" गृहस्येशानदिग्भागे होमस्थानं प्रकल्पयेत् । गृह्योक्तविधिना तत्र प्रतिष्ठाप्य हुताशनं ॥
" मुखांते समिदाज्याभ्यां हुनेदष्टोत्तरं शतं ॥
" प्रतिमंत्रं त्र्यंबकेन अथ मृत्युंजयेन च । व्याहृतिभिर्व्रीहितिलैर्मेधार्यंतं प्रकल्पयेत् ॥
" पूर्णाहुतिं च जुहुयात्कर्त्ता शुचिरलंकृतः । स्वर्णशृंगीं रौप्यखुरां कृष्णां धेनुं पयस्विनीं ॥
१० " वस्त्रालंकारसंयुक्तां निष्कद्वादशसंयुतां । तदर्द्धेन तदर्द्धेन दद्याद्दक्षिणया युतं ॥
" यथावित्तानुसारेण न्यूनाधिक्यस्य कल्पना । आचार्याय श्रोत्रियाय तां गां दद्यात्कुटुंबिने ॥
" यस्मात्त्वं पृथिवी सर्वा धेनो वै कृष्णसन्निभे । सर्वमृत्युहरे नित्यमतः शांतिं प्रयच्छ मे ॥
" ब्राह्मणेभ्यो विशिष्टेभ्यो यथाशक्त्या च दक्षिणां । ब्राह्मणान्भोजयेत्पश्चाच्छांतिवाचनपूर्वकं ॥
" एवं यः कुरुते सम्यक् तस्माद्दोषात्प्रमुच्यते ॥ "

१५ इति काकमैथुनशांतिः

## अथ काकस्पर्शशान्तिः

**नारदः**

" सूर्यास्तमनवेलायां वायसः संस्पृशेद्यदि । निःशब्दो वा सशब्दो वा पुंसो मृत्युप्रदायकः ॥
" अंगना च स्पृशेत्काको वैधव्यं तत्र निर्दिशेत् ।
२० " नदीतीरे गता गोष्ठे क्षीरवृक्षे सुरालये । नरो वायससंस्पृष्टो वधबंधनमाप्नुयात् ॥
" प्रतिचंद्रं प्रतिसूर्यं वायसः स्पृशते यदि । अर्थहानिं तथा मृत्युं शस्त्रेण च विनिर्दिशेत् ॥
" मासैः पंचभिरेवास्य निशाभिः फलमादिशेत् ॥
" तद्दिनादिफलं सद्भिः प्रोक्तमत्र शुभाशुभम् । शांतिं तत्र प्रकुर्वीत शास्त्रदृष्टेन कर्मणा ॥
" महानद्यामपि स्नात्वा शिवलिंगं निरीक्षयेत् । नत्वा संपूज्य लिंगं तु स्तुत्वा च दिक्पतीनपि ॥
२५ " आरभ्य तद्दिनादेव वायसेभ्यो बलिं क्षिपेत् । शनैश्चरदिने प्राप्ते एकांते शुभमंदिरे ॥
" कृष्णानि नववस्त्राणि अहतानि नवानि च । पूर्वादिक्रमयोगेन स्थापयेच्च पृथक् पृथक् ॥
" माषप्रस्थप्रमाणेन स्थापयेत्तत्र वायसान् । पूर्वस्यां कपिलं तत्र स्थापयेन्मंत्रपूर्वकं ॥
" नीलग्रीवमथाग्नेय्यां याम्यां च विकृतस्वरं । नैर्ऋत्यां च न्यसेत्क्रौंचमपमृत्युविनाशनं ॥
" विद्युज्जिह्वं च वारुण्यां वायव्यां कृष्णकर्बुरं । कौबेर्यां काष्ठनामानमीशान्यां कालमेव च ॥
३० " अस्ते कृष्णवस्त्रे तु यमं मध्ये प्रपूजयेत् । महिषं कृष्णवर्णं च यमं मापेश्च पूजयेत् ॥
" रक्तोत्तमांगं सर्वत्र आयुधैश्च समन्वितं । लोहदंडं चतुर्बाहुं पूजयेन्मंत्रपूर्वकं ॥
" यस्मिन्वृक्षे परेयिवासं सुगं नः पथानमेव च । एते मंत्राः समाख्याताः क्षुद्राणां नाममंत्रतः ॥

---

१ एतत्प्रकरणं तु केषांचित्–पुस्तकेषु काकस्पर्शशान्त्यनन्तरं दृश्यते । २ ख–भेत । ३ ख–ये ।

" अकालकलशं तत्र स्थापयेत्तस्य सन्निधौ । जलपूर्णं रत्नगर्भं पूर्णपात्रसमन्वित ॥
" स्थापयेत्तत्र देवेशं शूलपाणिं महेश्वर । प्रतिष्ठाप्य च तान् सर्वानथ मंत्रैः प्रपूजयेत् ॥
" कपिलस्त्वं च वर्णेन शुभाशुभनिवेदक । गृहाणार्घ्यं मया दत्तं भवाशुभविनाशन ॥
" नीलग्रीव गृहाणार्घ्यं मया दत्त खगेश्वर । अपमृत्युविनाशाय ददामि बलिमुत्तम ॥
" क्रूरस्त्वं पापिना नित्यं सौम्यस्त्वं धार्मिके जने । विकृतस्वर गृहाणार्घ्यं मया दत्तं शुभायन ॥ ५
" क्रूरस्त्वं पापिना नित्यं यद्यशुभ न कच्छसि । गृहाणार्घ्यं मया दत्तं काँच सौम्यप्रदो भव ॥
" विद्युजिह्व नमस्तेऽस्तु शोकव्याधिविनाशन । बलिं पूजा मया दत्त गृहाण सुखदो भव ॥
" कृष्णकर्बुरनामा त्वं भूतभव्यनिवेदक । गृहाणार्घ्यं मया दत्तं भव वैधव्यनाशन ॥
" काक त्वं कालनामासि दुष्टकालनिवेदक । गृहाण बलिपूजां मे दत्तां दुःखविनाशिनीं ॥
" श्वेतस्त्वं सितपर्णोसि मृत्युभावस्य सूचक । गृहाणार्घ्यं मया दत्तं भव मृत्युविनाशन ॥ १०
" तन्मध्ये पूजयेद्देवं धर्मराजं चतुर्भुज । यमाय धर्मराजाय मृत्यवे चान्तकाय च ॥
" वैवस्वताय कालाय सर्वभूतक्षयाय च । औदुम्बराय दध्नाय नीलाय परमेष्ठिने ॥
" वृकोदराय चित्राय चित्रगुप्ताय वै नम । नीलग्रीवाय लोकेश दण्डहस्ताय ते नम ॥
" पाशहस्ताय सायुधाय सपरिवाराय ते नम । चन्दनैश्च सुगन्धैश्च वासोभिः पूजयेद्यम ॥
" आदौ त्र्यम्बकमन्त्रेण ईश्वर च प्रपूजयेत् । मृत्युविनाशिनीं विद्यां कुम्भे चैव नियोजयेत् ॥ १५
" शतमष्टोत्तर चैव आचार्यो हृष्टमानस । स्वगृह्यकविधानेन चरु च यमदैवत ॥
" सम्पाद्य जुहुयाद्वह्नौ समिदाज्यचरूस्तिलान् । तद्वत्या समित्कार्या शतमष्टोत्तर तथा ॥
" समित्क्रमेण जुहुयात्प्रतिद्रव्य शत हुनेत् । सुगन्धुपथामन्त्रेण होतव्य सर्वमत्र तु ॥
" भद्रासन प्रकर्तव्य पञ्चवर्णकसयुत । तस्योपरि न्यसेत्पट्ट यजमानमथाव्हयेत् ॥
" निवेशाच्छादिते पट्टे अभिषेक च कारयेत् । पावमानीभिस्तु तल्लिंगैर्मंत्रैर्वारुणसम्भवै ॥ २०
तल्लिंगै सुगन्धपथामित्यादिभि ।
" तत्र स्नान प्रकर्तव्य तीर्थानीतेन वारिणा । सहस्राक्षादिभिर्मंत्रैः स्नान कार्यं द्विजोत्तमै ॥
" ततोऽ यद्धममादाय धर्मराज तु पूजयेत् । उक्तैः षोडशभिर्मंत्रैः सुगान्धित्यर्थं प्रदापयेत् ॥
" तत उत्थाय सप्रार्थ्य भक्तिभावसमान्वित । रक्ष मा पुत्रपौत्राश्च रक्ष मा पशुबाधवान् ॥
" रक्ष पत्नीं पतिं चैव पितर मातर धन । अग्नितो मे भय माऽस्तु रोगाच्च व्याधिबन्धनात् ॥ २५
" शस्त्रतो विषतोऽथौघाद्भय नाशय मे सदा । प्रार्थना च प्रकर्तव्या नमस्कारसमन्विता ॥
" काकस्पृष्ट च यद्वस्त्र स्नानक्लिन्न च यद्वस्त । सहिरण्य च तत्कृत्वा ब्राह्मणाय निवेदयेत् ॥
मन्त्र
" यत्किंचित्स्पर्शदोषोत्थ दुष्कृत अपि विद्यत । तत्सर्व नाशमायातु वस्त्रदानेन सूर्यज ॥
" वायसांस्तान् यम चेतमाचार्याय निवेदयत् । माषान्वासासि कृष्णा तु धेनु चैव पयस्विनीं ॥ ३०
" शनिवारे च तत्कार्यं रविवारेऽथ वा पुन । घृतपात्र ससौवर्ण दर्शयेदात्मनस्तनु ॥
" ब्राह्मणेभ्यो ददेदत्र भूयसीं चैव शक्तित । यथाशक्ति दक्षिणा दद्याद्वित्तशाठ्य न कारयेत ॥
" स्थाने यत्र स्पृशेत्काकस्तत्स्थान पूजयत्तदा । एवं कुर्यात्प्रदानेन ध्वाक्षदोष प्रशाम्यति ॥"
इति काकस्पर्शशाति ॥

१ ख-च ।

# अथ अद्भुतसागरे सिंहप्रसूता गौरेवमादिशांतिः

नारदः

" मानौ सिंहगते चैव यस्य गौः संप्रसूयते । मरणं तस्य निर्दिष्टं षड्भिर्मासैर्न संशयः ॥
" ततः शांतिं प्रवक्ष्यामि येन संपद्यते शुभं । प्रसूतां तत्क्षणादेव ता गां विप्राय दापयेत् ॥
५ " ततो होमं प्रकुर्वीत घृताक्ते राजसर्षपैः । आहुतीनां घृताक्तानामयुतं जुहुयात्ततः ॥
" सोपवासः प्रयत्नेन दद्याद्विप्राय दक्षिणां । वस्त्रयुग्मं यवं चैव ससुवर्णं प्रदापयेत् ॥
" इष्टदैवतमंत्रेण ततः शांतिर्भवेद्द्विज ॥

गर्गः

" दिवा प्रसुता वडवा श्रावणे च विशेषतः । माघमासे बुधे चैव प्रसवेन्महिषी यदि ॥
१० " सिंहे गावः प्रसूयंते स्वामिनो मृत्युदायकाः । जंगमे स्थावरं जातं स्थावरे अथ जंगमं ॥
" तस्मिन् योनिविपर्यासे परचक्रागमे भवेत् । त्यागो विवासो दानं वा कृत्वाप्याशु शुभं लभेत् ॥
" वडवा हस्तिनी गौर्वा यदि युग्मं प्रसूयते । विजात्यं विकृतं वापि षड्भिर्मासैर्म्रियेत वै ॥
" वियोनिषु च गच्छंति मैथुने देशनाशनं । अन्यत्र वेसरोत्पत्ते नृणां वा जातिमैथुनात् ॥
" सर्पमूषकमार्जारमत्स्यश्वानविवर्जिताः । ज्ञेया दुर्भिक्षकर्त्तारः स्वजातिपिशिताशनाः ॥
१५ " अकालजो मद्रो घोरश्चपुष्पान्मृगपक्षिणः । अन्यजातिभयं तस्मात् धेनुश्वानौ विशेषतः ॥
" अथानडवाननड्वाहं धेनुर्धेनुं पिबेद्यदि । शुनी वा धयते धेनुं शुनीं धेनुरथापि वा ॥
" तिर्यग्योनौ मानुषी वा परचक्रागमो भवेत् ।
" अमानुषा मानुषाणि जल्पंति प्राणिनो यदि । विकृतं वा प्रसूयंते परचक्रागमं वदेत् ॥
" त्यागो विवासो दानं वा तेषां कार्य्यं विजानता । तर्पयेद्ब्राह्मणांश्चैव जपहोमांश्च कारयेत् ॥
२० " मृदंगवाद्यैः पटहैः सुशोभनैः पूजा च कार्या त्रिदिवौकसानाम् ॥
" धातुस्तयेज्याविधिना च कार्या देयं तथान्नं बहु च द्विजेभ्यः ॥

गर्गः

"वृत्तं वा मुशलं वापि स्फुटते वाऽप्युलूखलं । वृत्तं दलनयंत्रं । भूतानां चैव बिभ्येत गृहे देवकुलेऽथ वा॥
" दृषद्वा भद्रपीठं वा आसनं शयनं तथा । अकस्मात्स्फुटते यत्र कंपते वा वसुंधरा ॥
२५ इत्यादीनि निमित्तान्युक्त्वा शांतिरप्युक्ता तत्रैव
" अश्वत्थसमिधो हुत्वा घृताक्तमधुसंयुताः । सावित्र्यष्टसहस्रेण प्राजापत्यास्तु मंत्रयेत् ॥
प्राजापत्याः प्रजापतिदैवत्याः
" पायसं भोजयेद्विद्वान् हुतांते भूरिदक्षिणा । ततस्तच्छाम्यते पापं धर्मराजमतं यथा ॥

स एव

३० " कृष्णाः पिपीलिका यत्र ग्रामेषु नगरेषु वा । अतिमात्रं तु दृश्यंते ऊर्ध्ववंशकृतालयाः ॥
" शांतिगृहे देवगृहे तथा नरपतेर्गृहे । उपर्युपरिमात्रं तु दृश्यते वेश्मवत्तदा ॥
" मक्षिका मशका दंशा अतिमात्रं भयावहाः । ईदृशैर्ऽशुणोत्पातैर्महाचोरभयं भवेत् ॥
" द्रव्याणां हरणं नृपात्परचक्रस्य चागमं । तत्र शांतिं प्रवक्ष्यामि विश्वामित्रोपदर्शितां ॥
" अश्वत्थसमिधश्चैव हुत्वा चाष्टोत्तरं शतं । पूर्णपात्राणि दातव्या हुतांते भूरि दक्षिणा ॥
" दासीदाससमायुक्तं गृहं दद्याद्द्विजातये । तिलपात्र प्रदानश्च तिलान् जुह्वीत संयतः ॥

स्वाहा । सर्वत्र होमः कार्य्यः । अग्निरन्नादोऽन्नपतिरन्नाद्यमस्मिन् यज्ञे यजमानाय ददातु स्वाहा । सोमो राजा राजपति । एवं सर्वत्र होमविधिः ।

" इत्थं कृत्वा होमकर्म आचार्यो विधिवत्ततः । शन्नो भवंतु मंत्रेण अश्वशालां प्रवेशयेत् ॥
" पवित्रं तेति मंत्रेण अश्वान् संप्रोक्षयेद् द्विजः । एष वाजीति मंत्रेण तथाश्वांश्च विसर्जयेत् ॥
" मा नो मित्रेति मंत्रेण तुरंगान्स्थापयेत्सुधीः । पूर्णाहुतिं च जुहुयादच्छिन्नघृतधारया ॥ ५
" भूतेभ्यश्च बलिं दद्यात् छिन्नांते मंत्रपूर्वकं । असुराः पन्नगा यक्षा यातुधानाश्च राक्षसाः ॥
" पिशाचाः सिद्धगंधर्वा वेताला योगिनी शिवा ।
" डाकिनी लाकिनी चैव शाकिन्या जंबुकादयः । अश्वारिष्टप्रशांत्यर्थं बलिं गृह्णंत्विमे ग्रहाः ॥
" इत्थं दत्वा बलिं सम्यक् भूतेभ्यश्च विधानतः । अश्वं च दक्षिणायुक्तं प्रतिमां वस्त्रसंयुतां ॥
" उद्दिश्य भास्करं देवमाचार्याय प्रदापयेत् । आकृतिर्देवतानां च द्विजेभ्यो वस्त्रसंयुताः ॥ १०
" दद्याच्च दक्षिणायुक्ताः श्रद्धापूतः समाश्रितः । आकृतीः प्रतिमाः । देवानामिंद्रादीनां ।
" अनेन विधिना कृत्वा हयानां शांतिकं महत् । अश्वानां नीरुजत्वं च बलं पुष्टिबलं तथा ॥
" लक्ष्मी स्थिता भनूनां च संग्रामे विजयो भवेत् । ब्राह्मणान् भोजयेत्पश्चात्ततः शांतिर्भविष्यति ॥"

इत्यश्वशांतिः ॥

## अथ गजशांतिः

सनत्कुमार उवाच १५

" अथ राजा प्रकुर्वीत चतुर्थ्यां गजवाजिनां । शांतिमामयतप्तानां तदुत्पातोदये सति ॥
" कवलानि च नादत्ते यदा स्वश्रूणि मुंचति । सद्यः प्रशांतो निर्वेदाद्यदा स्यान्मदवर्जितः ॥
" विहीनमतिरत्यर्थं परिक्षीणतनुर्द्विपः । विमानात्स्रस्तसर्वांगगुप्तो नष्टपराक्रमः ॥
" नष्टशोभः सदा हीनो नष्टसंज्ञो रुषान्वितः। नानाव्याधिसमुत्थाभिः पीडाभिः पीड्यते यदा॥
" अरिष्टोपनिपातेषु तयोत्पातभयेषु च । तदा शांतिं प्रकुर्वीत गजरक्षापरो नृपः ॥ २०
" अरिष्टादशुभं सर्वं वाजिनां लक्ष्यते यदा । युद्धारंभेषु च तथा तेषां शांतिं च कारयेत् ॥
" शांत्यर्थं गजवाजिनां मंडपं चतुरस्रकं । द्वादशारनिमानेन संमितं कारयेत्सुधीः ॥
" बाहुप्रमाणं मध्ये तु योनिनाभिसमुज्ज्वलं । कुंडं त्रिमेखलं कुर्यात् वृत्तं वा चतुरस्रकं ॥
" तत्पुरस्ताद्दक्षिणतः पश्चिमे चोत्तरे तथा । चतुरस्रं ततः कुर्यात्कुंडं हस्तप्रमाणकं ॥
" कोणेषु च तथा कुर्याद्वृत्तं चाष्टत्रिकोणकं । अर्कखादिरपालाशबिल्वाश्वत्थवटैरपि ॥ २५
" औदुंबर अपामार्गसमिद्भिस्तत्र तत्र च । मध्ये सर्वसमिद्भिर्वा पालाशैर्वाज्यबिल्वकैः ॥
" तिलतंडुललाजाभिः सक्तुसिद्धार्थशालिभिः । यवैर्मिश्रितमध्वक्तैर्मध्ये सर्वमिति स्थितिः ॥
" दत्वा च पयसा चैव घृतेन मधुनापि वा । कोणेषु च तथाज्येन मध्ये तु कलशैरपि ॥
" स्थापयेत ततः कुंभानष्टावष्टासु दिक्षु च । वस्त्रयुग्मेन संछन्नान् सर्वौषधिसमन्वितान् ॥
" सर्वरत्नयुतान् युग्मान् गंधपुष्पोदकैरपि । हस्तावरप्रमाणं तु वृहत्कुंभं तु मध्यमे ॥ ३०
" तीर्थोदकेन संपूर्णं सर्वरत्नौषधैरपि । चतुरः कलशांस्तत्र चतुर्थस्य समं ततः ॥
" कोणेषु च यथान्यायं जलवस्त्रादिकैर्युतान् । स्मरेत्प्रधानं कुंभे तु नरसिंहाकृतिं हरिं ॥
" चक्रशंखगदापद्मचर्मासिशरशक्तयः । पूर्वादिक्रमयोगेन ध्यातव्यं कलशेष्वपि ॥

१ ऋ. सं. ७।३।८ । २ ऋ. सं. ६।८।१८ । ३ ऋ. सं. २।३।७ । ४ ह्य-त्वमी । ५ ह्य-स्तब्धः... निर्वेदो स्यान्मदेन विवर्जितः । ६ नष्टपक्ष-ओ ।

" वहिः शक्रादिदिक्पालांस्तत्र तत्र च संस्मरेत् प्रधानकुंभात्पुरतः कुर्याच्चक्रं तु मंडलं ॥
" तत्र संपूज्य देवेशं पश्चाद्धोमादि साधयेत् । मंडलाग्रे तदा कुंभं कुंभाग्रे कुंडमेव च ॥
" सर्वत्रातलसंस्कारान् स्वगृह्योक्तेन कर्मणा । जुहुयादग्निसिद्ध्यर्थमाज्याहुतिसहस्रकं ॥
" आनुष्टुभेन मंत्रेण गुरुर्वाऽस्य पुरोहितः । आनुष्टुभो नृसिंहमंत्रो दशसाहस्रमिष्यते ॥
५ " समिद्द्रव्यचरूण्येवं हुत्वा मंत्री समाहितः । संयत्योज्याहुतीनां च सहस्रं वाऽयुतं चरेत् ॥
" ततः स्विष्टकृदित्यादि समापनविधिः क्रमात् ।
" एवं समाप्य विधिवद्धोमं तत्र पुरोहितः । संस्पृशेदुदकुंभं च जपेद्दशसहस्रकं ॥
" पर्यंतकलशान् स्पृष्ट्वा जपेत्तत्र सहस्रकं । अनंतरेषु कुंडेषु गायत्र्या प्रणवेन वा ॥
" ऋत्विग्भिर्युगपत्कार्यं होमतंत्रं तु पूर्ववत् । प्रतिकुंभं सहस्रं च जपेत्तानप्युपस्पृशन् ॥
१० " पूजयेल्लोकपालादीन् गंधादिभिरलंकृतः ।
" अथ राजानमाकार्य स्वास्तीर्णे सिंहविस्तरे । समाप्य च शुचिस्नातं सर्वालंकारसंयुतं ॥
" कुंभोदकेन देवाग्रे तन्मंत्रेणाभिषेचयेत् । पर्य्यंतकलशैश्चापि नृपं पश्चाद्गजादिकं ॥
" अन्यांश्च वाहनान्पूज्यदिव्यलक्षणसंयुतान् । गजादिनाऽवशिष्टेन तोयेन स्नापयेद्बुधः ॥
" अन्यवाहान् द्विपायातान् सर्वानेव समाहितः । बाह्यकुंभोदकेनैव स्नापयेच्छत्रसाधकः ॥
१५ " राज्ञो नीराजनं कुर्याद्वाहनेषु च मंत्रवित् । अन्येष्वेवं विधिः कार्य्यः स हि रत्नकरः परः ॥
" राजानं वारणांश्चैव तथाऽन्यांश्च पुरोहितः । सर्वालंकारसंयुक्तान् सर्वमंगलसंयुतान् ॥
" धृत्वा तु वाचयेत्पश्चाद्ब्राह्मणैराशिषो बहु । दक्षिणामप्यलं दत्वा ऋत्विग्भ्यो गुरवे नृपः ॥
" वाहनं वस्त्रभूषाणामाचार्याय निवेदयेत् । दासदासीषु भृत्येषु ग्रामादिषु च सर्वशः ॥
" सर्वालंकारसंयुक्तं राजवाहोपरि स्थितं । आरोहेश्चापि संयुक्तं राजानं वाहसंस्थितं ।
२० " मंत्री द्वीपैर्हयैश्चैव ब्राह्मणैः स्वस्तिवाचनैः । सानंदैश्चैव ऋत्विग्भिर्वृद्धैर्भद्रघोषैस्तथा ॥
" आचार्यो राजभवने नृपं संवेशयेत्स्वयं । पूर्वं स्नानावशिष्टेन कुंभतोयेन मंत्रवित् ॥
" गजशालां च संप्रोक्ष्य वाजिशालां तथैव च । सिद्धार्थतंडुलतिलैः पुष्पैर्वाऽप्यवकीर्य्य [illegible] ॥
" शालामध्ये नृसिंहं वा सुदर्शनमनामयं । पूजयेद्गंधपुष्पाद्यैः सर्वालंकारसंयुतैः ॥
" सक्तुभिः कृसरान्नेन कुर्याद्भूतबलिं बहिः ।
२५ " ततः शालासु सर्वासु ब्राह्मणान् भोजयेद्बलिं । ततः संवेशनं कुर्यादाचार्यो गजवाजिनां ॥
" एवं शांतिं प्रकुर्वीत निमित्ते सति तद्बुधः । सपरिच्छदस्य नृपतेर्मंत्राविस्सुसमाहितः ॥
" सर्वकल्याणसंपूर्णः सर्वबाधाविवर्जितः । सपुत्रो राजमंत्रस्तु नृपस्तेन महीयते ॥"

इति गजशांतिः ॥

## अथ महाशांतिः ।

श्रीकृष्ण उवाच

३० " महाशांतिं प्रवक्ष्यामि महादेवेन भाषितां । पार्थिवानां हितार्थाय महाद्भुतरताशिनीं ॥
" नृपाभिषेके सा कार्या यात्राकाले नृपस्य तु । दुःस्वप्ने दुर्निमित्ते च महद्वैगुण्यसंभवे ॥
" विद्युदुल्कानिपाते [illegible] जन्मर्क्षे ग्रहभेदने । केतूदये च निर्घाते क्षितिकंपस्य संभवे ॥
" प्रसूतौ मूलगंडांते यमलस्य च संभवे । छत्राणां च ध्वजानां च स्वस्थानात्पतने भुवि ॥
" काकोलूककपोतानां प्रवेशे वेश्मनस्तथा । क्रूरग्रहाणां चर्क्षेषु जन्मादिषु विशेषतः ॥

१ कनहामदः-ऐश्यात्मा । २ इतरत्पुनष्कतः । ३ ह्र-मैत्र । ४ ह्र-नृपः ठिं । ५ न-गदर ।

" जन्मनि द्वादशे चैव चतुर्थे वाऽष्टमे तथा । यदा स्युर्गुरुमंदाराः सूर्यश्चैव विशेषतः ॥
मंदः शनिः । आरो भौमः ।
" युद्धे ग्रहाणां सर्वेषां सूर्यशीतांशुकीलके । वस्त्रायुधगवाश्वेषु संस्मिते शयनासने ॥
" यत्राग्निः परिदृश्येत रात्राविंद्रधनुस्तथा । वेश्मनश्च तुलाभंगे गर्भस्त्रश्वतरीषु च ॥
" रविर्बिंबद्वये दृष्टे महाशांतिः प्रशस्यते । सर्वाणि दुर्निमित्तानि प्रशमं यांति सर्वथा ॥ ५
" तां कुर्युर्ब्राह्मणाः पंच कुलशीलसमन्विताः । चतुर्वेदास्त्रिवेदाश्च द्विवेदाश्चापि पांडव ॥
" आथर्वणा विशेषेण बह्वृचाश्च सुसंयताः । शुचयः श्रुतसंपन्ना जपहोमपरायणाः ॥
" कृच्छ्रोपवासनक्ताद्यैः कृतकायविशोधनाः । पूर्वमाराध्यमंत्रांस्तु प्रारभेत ततः क्रियाः ॥
मंत्रान्विनियोक्ष्यमाणान् ।
" दशद्वादशहस्तं वा मंडपं कारयेच्छुभम् । तन्मध्ये वेदिकां कुर्याच्चतुर्हस्तप्रमाणतः ॥ १०
" आग्नेय्यां कारयेत्कुंडं हस्तमात्रं सुशोभनं । मेखलात्रयसंयुक्तं योन्या चापि समन्वितं ॥
" रवींदोरुपरागेषु महोल्कापतनेषु च । उत्पातेषु तथाऽन्येषु निमित्तेषु च सर्वशः ॥
" सर्वारिष्टोपशमनीं महाशांतिः प्रशस्यते । चारुचंदनमाले च तोरणालंकृते तथा ॥
" गोमयेनोपलिप्ते च मंडपे ते द्विजातयः । शुक्लांबरधराः स्नाताः शुक्लमाल्यानुलेपनाः ॥
कर्म कुर्युरिति शेषः । १५
" ततश्च पंच कलशांस्तस्यां वेद्यां निवेशयेत् । आग्नेयादिषु कोणेषु पंचमं मध्यतस्तथा ॥
" अष्टपत्रकृते पद्मे चूतपल्लवधारिणं । ब्रह्मकूर्चविधानेन पंचगव्यं तु कारयेत् ॥
ब्रह्मकूर्चविधानं गोमूत्रं ताम्रवर्णाया इत्यादिना ब्रह्मकूर्चप्रकरणे प्रोक्तं ।
" ओषधीः पंचरत्नानि रोचनां चंदनं तथा । सिद्धार्थकान् शमीं दूर्वां कुशान्व्रीहियवांस्तथा ॥
" अपामार्गं फलवतीं न्यग्रोधोदुंबरौ तथा । प्लक्षाश्वत्थकपित्थांश्च प्रियंगुश्चूतपल्लवान् ॥ २०
" हस्तिदंतमृदं चैव कोणकुंभेषु विन्यसेत् । फलवती गंधप्रियंगुः । प्रियंगु कुंगः ॥
" पुण्यतीर्थोदकोपेतं पंचगव्यं च मध्यमे । ऋचं वाचमितीर्वं च वन्हिकुंभाभिमंत्रणं ॥
" आशुः शिशानं नैर्ऋत्ये यद्देवा वायुगोचरे । ईशावास्यं चतुर्थस्य कुंभस्य त्वभिमंत्रणं ॥
" मध्यमे त्वथ जप्तव्या रुद्राः कुंभे यजुर्भवाः । गंधपुष्पाक्षतैर्वस्त्रैर्नैवेद्यैर्घृतपाचितैः ।
" फलैश्च नालिकेराद्यैर्दीपकैः कुंभपूजनं । स्वस्तिवाचनकं चैव कारयेत्तदनंतरं ॥ २५
" क्रमेणानेन शनकैरग्निकार्यं च योजयेत् । अनेन वक्ष्यमाणेन ।
" अग्निं दूतमिहाग्निं च पूर्वमेव निधापयेत् । पूर्वं कलशस्थापनात् ॥
" हिरण्यगर्भः समिति ब्रह्मासननियोजने । कयानसा प्रणीताश्च मंत्रेण विनिवेशयेत् ॥
" कृत्वा चास्तरणं वन्हे राज्यसंस्कारमेव च । अथवा साधयेद्द्रव्यं द्रव्यं यस्य प्रयोजनं ॥
" ततः पुरुषसूक्तेन पायसश्रपणं भवेत् । अभिघार्याथसंसिद्धं पायसं स्थापयेच्छुचि ॥ ३०
" अष्टादशप्रमाणेध्मान् दद्याद्य शमीमयान् । पालाशीः समिधः सप्त सप्तते इति दापयेत् ॥
" आघारावाज्यभागौ तु हुत्वा पूर्वक्रमेण तु । जुहुयादाहुतीः सप्त जातवेदस इत्यृचा ॥
" स्थालीपाकस्य जुहुयात्पुनर्वै जातवेदसे । तरत्समंदीसूक्तेन चतस्रो जुहुयात्ततः ॥
" यमायेति सप्ताऽन्याः स्वाहां ता जुहुयात्ततः । स्वाहांता इति सर्वत्र योज्यं ।
" इदं विष्णुस्ततः सप्त जुहुयादाहुतीर्नृप । नक्षत्रेभ्यस्ततः स्वाहा सप्तविंशतिराहुतीः ॥ ३५

१ ह्र-या । २ ह्रं-स्तु । ३ ह्र-ह्रो । ४ ह्रर्थे-ना । ५ ह्र-चो ।

नक्षत्राहुतयश्च कृत्तिकाभ्यः स्वाहेत्यादिभिर्मंत्रैः कार्याः। तत्र रोहिणीद्वयपुष्यहस्तादित्रयानुराधादित्रयाभिजिद्द्वयशतभिषग्वर्जितेष्वेकवचनं। पुनर्वसुफाल्गुनीद्वयविशाखाश्विनीषु द्विवचनं। शेषेषु बहुवचनं।

" यत्कर्मणेति जुहुयात्ततः स्विष्टकृतं पुनः। ग्रहहोमस्ततः कार्यस्तिलैराज्यपरिप्लुतैः॥

५ अत्र तिलविधानं वैकल्पिकयवादिनिवृत्त्यर्थं।

" प्रायश्चित्तं ततो हुत्वा होमकर्म समापयेत्।

" ततस्तु तूर्यनिर्घोषैः काहलाशंखनिस्वनैः। यजमानस्य कर्त्तव्यो ह्यभिषेको द्विजोत्तमैः॥

" काश्मर्यवृक्षसंभूते समे भद्रासने स्थितं। काश्मर्यवृक्षः श्रीपर्णी। भद्रासनं॥

" वेदीमध्यगतं कृत्वा दुर्निमित्तप्रशांतये। पंचभिः कलशैः पूर्णैर्मंत्रैरेतैर्यथाक्रमं॥

१० " सहस्राक्षेण प्रथमं ततश्चैव शतायुषा। सजोषसा इंद्र इति च विश्वानि वरुणेति च॥

" द्रुपदा दिवेति च ततः स्नापयेयुः समाहिताः। ततो दिशां बलिं दद्याद्विचित्रान्नसमाश्रितान्॥

" नमोस्तु सर्पेभ्य इति मंत्रमुदाहरेत्। स्नातस्य ब्राह्मणाः सर्वे पठेयुः शांतिमुत्तमां॥

" शांतितोयेन धारां च पातयित्वा समं ततः। पुण्याहवाचनं कृत्वा शांतिकर्म समापयेत्॥

" तीर्थे देवालये वाऽपि गोदोहं कारयेद्बुधः। क्षितिं हिरण्यं वासांसि शयनान्यासनानि च॥

१५ " विप्रेभ्यो दक्षिणां दद्याद्यथाशक्त्या विमत्सरः। दीनानाथविशिष्टेभ्यो दद्याच्चैव युधिष्ठिर॥

" भोजनं चानिशं दत्वा ततः सर्वं प्रसिद्ध्यति। आयुश्च लभते दीर्घं शत्रून् विजयते क्षणात्॥

" दुर्गाणि चास्य सिद्ध्यंति पुत्रांश्च लभते शुभान्।

" यथा शस्त्रप्रहाराणां कवचं वारणं भवेत्। तथा दैवोपघातानां शांतिर्भवति वारणं॥

" अहिंसकस्य दांतस्य धर्मार्जितधनस्य च। दयादाक्षिण्ययुक्तस्य सर्वे सानुग्रहा ग्रहाः॥

२० " अर्थान् समर्द्धयति वर्द्धयते च धर्मं। कामं प्रसाधयति तस्य पिनष्टि पापं॥

" यः कारयेत्सकलदोषहरीं महार्थां शांतिं प्रशांतहृदयः पुरुषः सदैव॥

चर्मण्वतीतरणिजाशुभसंगमस्य। सान्निध्यमाजि कृतशालिनि मध्यदेशे।

ख्याता भरेहनगरी किल तत्र राजा। राजीवलोचनरतो भगवंतदेवः॥ १॥

इतिश्रीसेंगरवंशावतंसमहाराजाधिराजश्रीभगवंतदेवोद्योजिते

मीमांसकभट्टशंकरात्मजभट्ट-नीलकंठकृते भगवंतभास्करे शांतिमयूखो द्वादशः समाप्तः॥

---

क्षरदयइअढकच—श्रीनीलकंठरचितः स्मृतिभास्कराख्यो ग्रंथः पचार रससायकभूमितेब्दे॥

चैत्रे सिते रवितिथौ रविवासरपंच पत्रीकृतो विकसताजनतोपकृत्ये॥

येनादतः कतिपयैरपि दुष्टम वैः किं तेन भावानिपुणाः खलु सन्ति सन्तः।

दिग्दिग्ध चंचुपटकाककदर्थकेन पक्वं रसालफलमुज्झितमेव सम्यक्॥

ट—पुस्तकेऽधिकः श्लोको दृश्यते।

गण्डान्तेंद्रभमूलभागतपीयष्याघातगंडावभे।

संक्रान्तिव्यतिपातवैधृतिसिनीवालीकुहूदर्शके॥

भे कृष्णचतुर्दशेषु यमघंटे दग्धयोगे मृतो।

विष्टौ षोढभेजनिर्नपितृभे चस्तादुभा शांतिदः॥ इति शांतिमयूखः

## एतत्पुस्तकोद्धृतऋषिवचनानां ऋषीनां च अकारादिवर्णतः सूची।

## २ व्याकरणसूत्राणि.



## ३ ऋक्संहितामंत्राः

No Hindu Law Texts—(contd)

III. The **Subodhini**—A commentary by Vis'ves'wara Bhatta —on the **Mitâksharâ** of Sri Vijnânes'vara, Vyavahârâdhyâya Complete with list of contents, and Index as in Vol. I. [ Price Rs. 2-8.

IV. English translation of **Subhodhi**—in progress.

V. **Bâlambhatti**—Âchârâdhyâya. ( Text ) a commentary on the Âchârâdhyâya *of the Mitâkshâra, by* Balambhatta Pâyagundâ of Banares with the list of contents and Index, as in Vol. I and an exhaustive Preface by Babu Govind Dass [ Complete Price Rs 10.

VI. **Balambhatti**—Vyavahârâdhyâya Do. Do ( Text ) Complete) [ Price Rs. 6.

VII. **Balambhatti**—English Translation of Vol. VI.

VIII **Balambhatti**—Prâyas'chittadhyâya ( Text ) In the Press [Price Rs. 6.

IX The **Manusmriti** with the gloss of **Medhatithi** (Text) The list of contents is exhaustive and specifies each verse and its contents, as well as the contents of the commentary thereon The Index to verses is to each quarter of a verse This is followed by an Index to the several Authors and Rshis referred to, to Miscellaneous Quotations, to the Sutras and Vartikas of Grammar, to the several Nyayas or Maxims &c *The Bound Volume* contains Text pp 1–942+250. [ Price Rs. 15.

X. English Translation of Vol. IX

XI. The **Smiritichandrika** by Devânandabhatta (Text). The Ânhika Vyawahâra and S'râddha Prakaranas complete pp 1–736+104 with Indices as in Vol IX. Bound Volume. Price Rs. 12.

XII. *English Translation of the above i e* Vol. XI

XIII The **Sapindya Pradipa** or the Law of Sapinda. Relationship—by Nagojibhatta with an English Translation. Appendices containing extracts from other works on the Sapinda relationship and an exhaustive Introduction dealing with the whole law of Sapinda relationship as laid down in the text and as interpreted in courts of law ( Text printed )

XIV to XXV. The **Twelve Mayukhas** by **Bhatta Nilakantha** collectively known as the Bhagavanta-Bhâskara.

XIV-A The **Vyawahâra-Mayukha**—Text complete and published with List of contents, Indices &c, Bound Volume Rs. 3.

IV-B. English Translation and notes uniform with the series. Price Rs. 12.

XV. The **Sauskāra-Mayukha**—Detailing the several purificatory ceremonies. (Text) (in the press).

XVI. The **A'chāra-Mayukha**—In this are described the ordinary and extraordinary rounds of duties. (Text) Price Rs. 2.

XVII. The **Kâla** or **Samaya-Mayukha**—Rules for determining days &c and the importance of each, together with the rites and duties to be performed are described (Text) (in the press).

XVIII. The **S'râddha-Mayukha**—Kinds of S'râddha and their definitions and an elaboration of their performance. (Text) (in the press).

XIX The **Niti-Mayukha**—Describing the general principles of polity duties and functions of a king, his minister, &c. (Text) (in the press)

XX. The **Dâna-Mayukha**—Embodying and elaborating the Law of gifts viz the kind of gifts, who can make and take? Their extent and their incidence. (Text) (in preparation)

XXI. The **Utsarga-Mayukha**—Dealing with the dedication of water places and their purification when poluted. (Text) Price As 12.

XXII. The **Pratishthâ-Mayukha**—Consecration of Temples and also the re-establishment thereof. (Text) Price As. 12.

XXIII. The **Prâyaschitta-Mayukha**—Definitions and kinds of Prāyas'chittas Results of non-observance. (Text) (In preparation)

XXIV. The **S'uddhi-Mayukha**—The Law of purification. (Text) Price Re. 1.

XXV. The **S'anti-Mayukha**—Describing the several propitiatory rits) are. (Text) Rs. 2.

XXVI. **Vira Mitrodaya**—(Vyavahâra) By Mitra Misra In preparation.

XXVII. The **Vaidyanatha- Dikshitiyam**—(Text) In preparation.

XXVIII. The **Dharma-Tatva Jimuta-Vâhana**—(Text) In preparation.